अवतरति धराधाम्नि तापातङ्कितान् पापपङ्किलान् शापशङ्कितान् जनगणान् उद्धारयितुम्। वाङ्मनसागोचरः अदृश्योऽतीन्द्रियः परमेश्वरोऽपि दृश्य-देहमनोयुक्त इवाविर्भवति अस्मत्सम्मुखे— तुच्छातितुच्छ-तृणगुच्छेष्वपि तस्यारुण-किरण-चरणयुगलं संस्थाप्य, हीनातिहीन-वालुकाकणाग्रामपि तस्य दिव्यदीप्तिं प्रकटय्य, क्षुद्रातिक्षुद्रेष्वणुषु परमाणुष्वपि तस्य श्रेष्ठ-शक्तिं-प्रकाश्य।

अहो चिन्तनमात्रेणाप्यहं रोमाञ्चित-कलेवरो भवामि।

( लेडी इसावेलम् उद्दिश्य ) यथा तथा वा भवतु, लेडी इसावेल्महोदये ! अहं विदायं याचे साम्प्रतम्। मधुरं खलु भवत्या आतिथ्यम्। शतसहस्राणि धन्यवादान् विज्ञापयामि भवत्यै तदर्थम्।

लेडी इसावेल्। नहि नहि, आर्य ! धन्यवादस्य का कथा ? सातिशयम् अनुगृहीता वयं भवदागमनेन।

आर्य ! वाञ्छामि भृशं भवन्मुखात् भारतीय-सङ्गीतमेकं श्रोतुम्।

विवेकानन्दः—वाढम् सुष्ठु तत्। शृण्वन्तु कृपया सर्वे—

( सङ्गीतम् )

भ्रमामि विश्वभुवने व्याकुलः
वर-ब्रह्माभिलाषी।
कठोर-क्लेश-क्लेद-शूलः
स देवो विघ्ननाशी॥
स देवो मम मनःप्राणगतिः
स देवो मम रमरसः।

स देवो मम मनोहारिमतिः
स देवो मम मधुहृसः॥
स देवः कमन-करुणाधीनः
विमलालोकविलासी।
अयमतिहीनः पदतललीनः
तदवलोकन-प्रयासी।

शिवः शिवः शिवः। (निष्क्रान्तः)

मार्गारेट्। (मन्त्रमुग्धवत्) शिवः शिवः शिवः! परम शिव एव अकस्मादाविर्भूतो मत्सम्मुखे—परम-मङ्गलमयस्त्राता।

अहो किं मोक्षलग्नं समुपस्थितं मत्सम्मुखे अकस्मात्? किं भवार्णवतरण-तरणो भासमानो मत्सम्मुखे अकस्मात्? किं संसार-मरुनिर्झर उत्सारितो मत्सम्मुखे अकस्मात्? किं पृथिवी-कारागार-प्रदीपः प्रज्वलितो मत्सम्मुखे अकस्मात्?

न जाने तत्, न जाने, न जाने न जाने। (वेगेन निष्क्रान्ता)

इति प्रथम-दृश्यम्

—०—

## द्वितीय-दृश्यम्

[निवेदिताः श्रीगुरुपरीक्षणम्]

स्थानम्—लण्डनस्थ-गृहम्।
समयः—अपराह्ण। मे-मासः। १८९६ खीष्टाब्दः।
[धर्मालोचन-सभा]

( कतिपये ज्ञानपिपासुजना उपविष्टाः )

मार्गारेट् । मिस् म्याक्लयेड् महोदये ! मिस् हेन्रियेटा मूलार महोदये च ! मन्ये भवदामन्त्रितोऽयं भारतीय-सन्नचासी स्वामि-विवेकानन्द-महोदयः कश्चिच्छद्मवेशधारी ऐन्द्रजालिको महामायावी वा । ( सर्वे हसन्ति )

मिस् मूलार् । तत् कथं भगिनि ! तत् कथम् ?

मिः इ टि स्टार्डि । मान्य-महाशये ! अपूर्वः खलु भवत्याः सिद्धान्तः ! भारतवर्षम् आद्यन्तकालं साधु-भक्त-ऋषिगणपूर्णम् । ततः कथम् चिकागोस्थ-विश्वधर्ममहासम्मेलने भारतात् एकश्चतुर-चटुल ऐन्द्रजालिकः केवलम् आगतः ! अहो ? मन्ये भारतवर्षस्य सहस्र-सहस्र साधवो मर्त्यभूमिं परित्यज्य ब्रह्मलोकं प्रस्थिताः सानन्दम् अमृतपानार्थम् । तत एवेयं दशा भारतस्य । अहो कष्टम् ! ( छलेन दीर्घं निःश्वसिति ), ( सर्वे हसन्ति )

मार्गारेट् । उपपादयामि युष्मभ्यं मम सिद्धान्तस्य प्रामाण्यम् । ऐन्द्रजालिको यथा कर-कौशलेन वचन-नैपुण्येन च मिथ्याभूतमपि वस्तु सत्यरूपेण प्रकटयन् विभ्रामयति सर्वान्, तथाऽयं भारतीय-सन्नचासि-प्रवरः श्रोतॄन् दर्शकांश्च मधुर-मोहन-वाक्यजालानि विस्तार्य बन्धुं यतते निरन्तरम् । ( सर्वे हसन्ति )

भवतु, अद्य तस्य परीक्षा कार्या । सज्जीभवन्तु भवन्तः सर्वे प्रश्नबाणान् निक्षेप्तुम् अस्मिन् महाभारतीय-वीरवरे । तस्य निस्तारो नास्त्यद्य अस्मत्सदृश-योद्धृणां हस्तात् । ( सर्वे हसन्ति )

( ततः प्रविशति स्वामि-विवेकानन्दः प्रफुल्लवदनः )

विवेकानन्दः । नमो भवद्भ्यः । भवन्तः परमानन्दमया इव परिलक्ष्यन्ते, सुष्ठु तत् । यतः परमानन्दस्य मूर्तिरूपा इयं पृथिवी । अतएव न सा क्लेश-क्लेद-क्लिष्टा, पापताप-पिष्टा द्वेष-दोष-दिष्टा च । सा आनन्द-प्रतिमूर्तिः, सा आलोकवर्तिका, सा अमृत-निर्झरिणी !

मार्गारिट् । ( वेगेनोत्थाय ) स्वामि-महोदय ! क्षमतां मां कृपया । किन्तु मुक्तिकामा वयं भवतो मधुर-मोहन-वाक्यजालं छेत्तुं कामयामहे । ततो निक्षेप्स्यामो वयं प्रश्नवाणान् भवदुपरि । सज्जीभवतु भवान् ससाहसम् ।

( सर्वे हतचकितास्तिष्ठन्ति )

मिस् म्याक्लयेड् । स्वामि-महोदय ! कृपया मा दोषान् गणयतु भवान्अस्माकम् । विशेष-कारणादेव उत्तेजिता जातेयं ललना । भवतः काचिदप्यवमानना तु नास्माकं काम्या ।

विवेकानन्दः । ( विहस्य ) आर्ये ! मा पर्याकुला भवतु भवती मदर्थम् । कात्र अवमाननायाः कथा ? अहं श्रीगुरुतत्त्व-प्रचारव्रती सन्न्यासी । ततो निश्चितमेवाहं प्रष्टव्यो भवद्भिः, निश्चितमेव जिज्ञासु-जनानां प्रश्नानां यथाशक्त्युत्तरदानं मम कर्तव्य-भूतम् । निश्चितमेव प्राणपण ज्ञानालोकविस्तारो मम जीवन-लक्ष्यम् । ( मार्गारिटम्. उद्दिश्य सकौतुकम् ) भद्रे ! सज्जीभूतोऽहम् । मम विशाल-वक्षस्तु वर्मावृतं वर्तते । ततो निक्षिपन्तु भवन्तो भवतां प्रश्नवाणान् । न मरिष्यामि वीरपुङ्गवः श्रीरामकृष्णसन्तानोऽहं सुनिश्चितम् । ( सर्वे हसन्ति )

मार्गारेट्। (सुगम्भीरा) नायम् उपहासविषयः। अयमस्माकं जीवन-मरण-समस्याविशेषः। यतः प्रकृत-ज्ञानपिपासवो वयं सद्गुरुसन्धानकामिनो निरन्तरम्।

विवेकानन्दः। (सुगम्भीरः) सुष्ठु तत्। नाहं गुरुपदकामी। किन्तु वदामि यच्छ्रीगुरुरपि परीक्षणीयः आद्योपान्तं विचारणीयश्चसुनिश्चितम्। तुच्छातितुच्छोऽहं स्वयमपि श्रीरामकृष्णसदृशं महान्तं गुरुमपि सन्दिहानो वत्सरत्रयं सूक्ष्मातिसूक्ष्मरूपेण परीक्ष्य---तदनन्तरमेव—न ततः पूर्वं, कदापि न—तं श्रीगुरुरूपेण वृतवान्। ततो भवद्भिरपि तथैव करणीयम्।

वस्तुतो विचार-बुद्धिशीलस्य स्वाधीन-चिन्ताकुशलस्य मानवस्य पक्षे परनिर्भरशीलता अमार्जनीयोऽपराधः। अतएव श्रीगुरुरपि विशेषरूपेण परीक्षणीयः।

मागारेट्। धन्यवादः, महाशय! धन्यवादः।

विवेकानन्दः। के भवत्याः प्रश्नाः? प्रारभतां भवती, कृपया प्रारभतां सत्वरम्।

मार्गारेट्। महाशय! भवतो ब्रह्मवादो न मह्यं रोचते। यतोऽयम् आद्योपान्तं मधुर-वाक्यभित्तिकः केवलं, न तत्त्व-ज्ञाननिष्णातः।

विवेकानन्दः। भद्रे! का भवत्या विप्रतिपत्तिरत्र?

मार्गारेट्। शृणोतु भवान्। कथं मृत्तिका-प्रस्तरसमाहारो जडस्वरूपोऽयम् अपवित्रः संसारः, पार्थिव-भावानुकूलः पापताप-

मथितोऽयं संसारी जीवश्च ब्रह्म भवेताम् ? असम्भवम् अयौक्तिकम् अलीकञ्च तत् ।

ब्रह्म ब्रह्माण्डमेवेति जीव एव शिवस्तथा ।
भारतीयमिदं तत्त्वम् असम्भवमसाम्प्रतम् ॥ १६
मृत्कणा नितरां क्षुद्रा शैलत्वाय न कल्पते ।
पयःकणो वातितुच्छः सागरीभवति क्वचित् ॥ १७
न वा बीजमतिक्षुद्रं विवर्तेत वनस्पतौ ।
ब्रह्म-ब्रह्माण्डयोरैक्यं स्यात् कथं शिवजीवयोः ॥ १८

मिस् भूलार् । भगिनि मार्गारेट् ! मा अकारणम् उत्तेजय आत्मानम् । अयं सन्नचासिप्रवरः प्राज्ञश्रेष्ठः साधुश्रेष्ठश्च । ततः कथं सः अयौक्तिकम् अलीकञ्च तत्त्वं प्रचारयितुं जीवन-पणं कृतवान् ?

मार्गारेट् । तत् तस्योन्मत्ततैव । तेन मम किम् ? अहं केवलं जाने यत्, तस्य तत्त्वादिकं न शुभप्रकाशि क्षोभप्रणाशि लोभप्रशसि वा ।

अपि च, नेदं तत्त्वम् अस्य स्वामि-विवेकानन्द-महोदयस्य स्वसम्पत्तिः येन तस्य निन्दावादेन तत्प्रचारक-स्वामि महोदयस्यापि निन्दा भवेत् । इदं ब्रह्मतत्त्वं भारतवर्षस्य शाश्वत-तत्त्वम् इति तेनैव कथितम् । ततो नाहं बुध्ये किमत्र तस्यावमाननाकारणम् ।

मिस् म्याक्लयेड् । अयि प्रज्ञाप्रदीप्ते ! अखण्डनीया खलु तव युक्तिः । तथापि वदामि—परम-वरणीयः परमादरणीयश्चास्माकं स्वामिमहोदयः । धन्यातिधन्यं जातमिदं गृहं तस्य पुण्य-पादरजोभिः । ततः स न केनापि प्रकोपयितव्यः ।

विवेकानन्दः । ( विहस्य ) मातः ! कोपस्य का कथा ? प्रत्युत मम तत्त्वविषये मिस् मार्गारेट् नोव्ल्-महोदयाया औत्सुक्यं मम गभीरानन्दकारणम् एव । यतोऽस्मिन् स्वार्थसर्वस्वे संसारे को वा कस्य विषये आग्रहशीलः ? ( सर्वे हसन्ति )

विवेकानन्दः । ( मार्गारेटम् उद्दिश्य ) अतीव सुबुद्धिप्रसूतो मङ्गलदायकश्चायं प्रश्नः । अस्योत्तरं ददामि सानन्दं—न मद्वचनेन, किन्तु मत्तः सहस्रगुणेन प्राज्ञतराणां वचनेन—"सर्वं खल्विदं ब्रह्म" "तत् त्वमसि" ।

मार्गारेट् । ( स्वामि-विवेकानन्दमनुकृत्य ) "सर्वं खल्विदं ब्रह्म" "तत् त्वमसि ! ( स्वगतम् ) ! अकस्मात् रोमाञ्चित-कलेवराहं जाता वाक्ययोरेतयोरुच्चारणमात्रेण । "सर्वं खल्विदं ब्रह्म" "तत् त्वमसि" ! अहो ! अहो मधुरतमोऽयं भावो महत्तमश्च । भवतु, तथापि ईदृशी भावावेगो न मयि शोभते । पाश्चात्त्य-शिक्षागर्विताहं स्वाधीना रमणी । कथमहं परदेशीय-वचन-चातुर्येण विभ्रान्ता भवेयम् ? नैतन्मयि युज्यते । ( प्रकाशम् ) स्वाम्विमहोदय ! अपि नेदमत्युक्तिमात्रम् ?

विवेकानन्दः । ( सावेगम् ) नहि, नहि, नहि । नेयम् अत्युक्तिः—नायं पुण्यप्रसन्नानां प्राज्ञानां शून्यगर्भो भावावेगः केवलम् ; नेयं कल्याण-कोमलानां कवीनां कमन-कुशला प्रशस्तिः केवलम् ; नेदम् अत्युग्रप्रतापानाम् असम-साहसानां दर्पदुर्मदम् आस्फालनं केवलम् । इदम् अक्षरशः सत्यम् । किं न पश्यन्ति भवन्तस्तत् ?

मागारेट् । (सहसा युक्तहस्ता भावचालिता सगद्गदम्) पश्यामि आर्य ! पश्यामि । भवच्चक्षुर्भ्याम् अहमपि पश्यामि आर्य ! पश्यामि तत् सानन्दम् ।

विवेकानन्दः । (सहसा भावाविष्टः) पश्यन्तु भवन्तः पश्यन्तु ! पृथिव्याः प्रत्येकं धूलिकणा सानन्दं प्रकाशयति तस्य परम-सुन्दरस्य कनककान्तिम् ; पृथिव्याः प्रत्येकं वारिविन्दुः साग्रहं प्रवर्षति तस्य परम-मधुरस्य सुरससुधाम् ; पृथिव्याः प्रत्येकं तृणगुच्छः सादरं प्रकटयति तस्य परमैश्वर्यवतो धन्यधनम् ।

पश्यन्तु भवन्तः पश्यन्तु—निर्मल-नीलगगने तस्यैव स्नेहदृष्टिः, प्रसन्न-प्रभात-पवने तस्यैव सुधास्पर्शः, त्वरित-तटिनी-तरङ्गे तस्यैव ललितलीला, वरेण्य-विहगगाने तस्यैव विमलवाणी इति ।

स्वमिन् येनालोकि सम्यक् परात्मा
ब्रह्माण्डेऽस्मिन् ब्रह्म जीवे शिवश्च ।
दृष्टिस्तस्य ब्रह्मदृष्टिस्तथात्म-
दृष्टिः सैका सत्यदृष्टिश्च विश्वे ॥ १९

जीवाः सर्वे जन्म-मृत्योरधीना
आत्मा पापी ताप-दैन्यादिखिन्नः ।
ब्रह्माण्डं मृत्स्तोम-पाषाणराशिः
सेयं दृष्टिर्भ्रान्तिमूला जघन्या ॥ २०

मार्गारेट् । अपूर्वा खल्वियं वर्णना ।

विवेकानन्दः । वर्णना ? नेयं वर्णना, नेयं केवल-वाङ्मयी रचना ; इयं वाक्यातीता अनुभूतिः ।

मार्गारेट् । अनुभूतिः ? का सा ?

विवेकानन्दः। अनुभुतिः आत्मनैव आत्मनो दर्शनम्, आत्मनैव आत्मनः स्पर्शनम्, आत्मनैव आत्मन आस्वादनम्। सा हि अस्माकं स्वरूपकृतिः, सा हि अस्माकं सत्ताधृतिः, सा हि अस्माकं सत्यसृतिः।

मार्गारेट्। भवदावेग-स्रोतसा वाहिताहं भीमनिनादिन उत्तुङ्गजलप्रपातस्य मध्ये निपतिता क्षुद्रातिक्षुद्रा कुसुम-कलिकेव।

विवेकानन्दः। (पूर्ववत्) अतएव "सर्वं खल्विदं ब्रह्म" इति तत्त्वस्य प्रमाणार्थं सूक्ष्मातिसूक्ष्मो युक्तिविचारो न प्रयोजनीयः, न प्रयोजनीया कठिनातिकठिना दर्शनालोचना, न प्रयोजनीयं गभीरातिगभीरं तत्त्वचिन्तनम्। प्रयोजनीया पुनः सर्वदेहे सर्वमनःसु सर्वात्मनि ब्रह्मोपलब्धिः। ॐ ब्रह्म, ॐ ब्रह्म, ॐ ब्रह्म।
(समाधिग्रस्तः)

मार्गारेट्। हा हतास्मि मन्दभाग्या! स्वामिमहोदयो मूर्छित इव परिलक्ष्यते। अहो! किं करोमि, किं करोमि किं करोमि।

मिसेस् म्याक्लयेड्। अहो कम्पते मम सर्वशरीरम्, शुष्यति मम जिह्वा, स्विद्यति मम हस्तपादम् इदमपूर्वं दृश्यं दृष्ट्वा। अहो! किं करोमि, किं करोमि, किं करोमि?

स्टार्डि। भद्रे! मा पर्याकुले भवतां भवत्यौ। मन्ये कल-कोलाहलेन अवस्था शोचनीयतरा भविष्यति। ततः कृपया तूष्णीम्भवताम्। मन्ये, अत्र भगवन्नामोच्चारणं वरम्।

(सर्वे समस्वरेण गायन्ति)

"हरे कृष्ण हरे कृष्ण हरे कृष्ण हरे हरे।
हरे राम हरे राम हरे राम हरे हरे॥

विवेकानन्दः। ( संविदं लब्ध्वा ) कोऽत्र भोः !

अहो समासीनोऽहम् अत्रैवाद्यापि—अस्मिन् भेदभ्रमभाविते भूमितले, अस्मिन् भवभयभरिते भुवनस्थले, अस्मिन् धूलिधोरणि-धूसरिते धरणीकोले, अस्मिन् माया-मोहमथिते मर्त्यलोके, अस्मिन् शङ्का-सङ्कटकलिते संसार-मध्ये !

अहो आनन्दः ! स्वार्थपरोऽहम् अपार्थिवम् अत्याश्चर्यम् अतुलनीयं समाधिस्तरं लब्ध्वा आनन्दोत्फुल्लो जातः। किन्तु तत्रैवावस्थानं न शोभते मयि। यतोऽहं परसेवा-व्रतधारी दास-विशेषः। यावदस्या विशाल-वसुन्धधाराया—न केवलं तत्, न केवलं तत्—विशालतरब्रह्माण्डस्यापि प्रत्येकम् अणुः परमाणुः, प्रत्येकं धूलिकणः प्रत्येकं कीटाणुकीटोऽपि न मुक्तो भविष्यति तावन्न कामयेऽहं स्वकीयं मोक्षम्, न कामये ब्रह्मानन्दम्, न कामये ब्रह्मामृतम्, न कामये ब्राक्षीं स्थितिम्। कदापि न, कदापि न, कदापि न।

मार्गारेट्। अहो ! पुलकोद्गतरोमाहं जाता। अभूतपूर्वा खल्वियं दशा ! तुहिन-शीतलं मे मनः, प्रस्तर-कठिनं हृदयम्। किं तदपि गलति, किं तदपि नमति ? आश्चर्यं महदाश्चर्यम् !

घोरान्धकारोऽभ्युदिते दिनेशे<br>
भूरेणुरुद्दामगतौ समीरे।<br>
तापश्च वर्षासु समागतासु<br>
यथैव सद्यो विलयं प्रयाति॥ २१

तथास्य विज्ञस्य सुदीप्तवाचा<br>
मोहान्धकारो मनसोः गतो मे।

तापोऽप्यविश्वासमयोऽपनीतः
सन्देह-धूलिश्च लयं प्रयाता ॥ २२

अज्ञानसुप्तं सुचिरादविश्वसत्
सन्देहदोलाकुलितं मनो मम ।
कालादनेकात् परमद्य विन्दते
सानन्द-शान्तिं बहुभाग्ययोगतः ॥ २३

विवेकानन्दः । ( पूर्वावस्थां प्राप्य सकौतुकम् ) भद्र ! अपि भवत्प्रश्नस्योत्तरं प्राप्तं भवत्या ? किमहं भवत्परीक्षात्तीर्णः ससस्मानस् "अनार्स" सहयोगेन ? ( सर्वे हसन्ति )

मार्गारेट् । ( भावाकुला ) आर्य ! श्रीभगवत्परीक्षायां भवता प्रथमस्थानम् अधिकृतं सुनिश्चितम् । का वा कथा मम ? श्रीभगवतः शिक्षालये अहं न निम्नतम-श्रेणीगता अपि । किमधिकं, नास्ति मे तत्र प्रवेशाधिकारोऽपि । ततो दम्भसम्भूता भवत्परीक्षक-पदप्राप्ति-प्रचेष्टा मम व्यर्था जाता । कृपया क्षमतां मां देवः ।

बिवेकानन्दः । ( विहस्य ) श्रीभगवतः शिक्षालयस्य द्वारं सदोन्मुक्तं सर्वार्थमेवा न तत्र प्रयोजनीयं "एचाड्मिशन्-टेष्ट्" अथवा प्रवेशाधिकार-परीक्षादानम्, न तत्र प्रयोजनीयं वेतनदानस्, न तत्र प्रयोजनीयं पाठ्य-पुस्तक-चयनं वा । तत्र प्रयोजनीयः केवलं विश्वासः—अचलोऽटलो विश्वासः । तत्र प्रयोजनीया केवलं श्रद्धा—अमला अखला श्रद्धा । तत्र प्रयोजनीयं केवलं स्थैर्यम्—अनमनोयम् अङ्चलनीयं स्थैर्यम् ।

सज्जीभवन्तु सर्वे अस्मिन् रमणीये रसघने शिक्षालये प्रवेशार्थम् ।

का अस्य शिक्षा ? ब्रह्मानुभूतिः आत्मोपलब्धिः—समार्थके उभे समस्वरूपे च।

प्राणप्रतिमाः ! भद्राः ! भवत्वद्य भवतां शुभशिक्षारम्भः अस्मिन्नेव भगवच्छिक्षालये। किं वा अधिकं प्रयोजनीयम्।

ॐ ब्रह्म, ॐ ब्रह्म, ॐ ब्रह्म।
ॐ आत्मा, ॐ आत्मा, ॐ आत्मा।
ॐ माता, ॐ माता, ॐ माता।

मार्गारिट्। ॐ ब्रह्म ॐ ब्रह्म ॐ ब्रह्म (इत्यादि उच्चारयन्ती) भवत्वयमेव मे जीवनमन्त्रः।

विवेकानन्दः। (सावेगम्) मम जीवनधन-बान्धवाः! अपि जानन्ति खलु भवन्तः जगत कः अभावः, जगत् किं कामयते साम्प्रतम् ? जगत् कामयते ईदृशीविंशति-संख्यका नरनार्यीर्या पथि दण्डायमानाः सदर्पं वक्तुं शक्नुवन्ति—"ईश्वरोऽस्माकम् एकमात्रसम्बलम्।"

वदन्तु वदन्तु भवन्तः—के के गन्तं प्रस्तुताः, कथयन्तु कथयन्तु भवन्तः—के के गन्तु प्रस्तुताः ?

(सर्वान्, विशेषतो मार्गारिटं प्रति सुतीक्ष्नां मर्मभेदिनीं च दृष्टिं निदधाति।)

मार्गारिट्। (स्वगतम्) अहो ! कथं स्वामिमहोदयः तीक्ष्नया मर्मभेदिन्या च दृष्ट्वा मामेवावलोकयति ? किं स मामेवोद्दिश्य इदं कथयति ? किं स मामेव तस्य महामहिमान्वित-व्रतस्य संपालिकारूपेण आह्वयति ? अहो आशातीतं सौभाग्यं मम ! किन्तु अनिर्वचनीय-भावलहरी समुत्तिष्ठति मम चित्तकन्दरे सहसा। स्पन्दते

मम हृदयम्, धावति मम शोणितः श्रोतः खरतर-वेगेन धमनीमध्ये। किं करोमि, किं करोमि, किं मे कर्तव्यम् ?

विवेकानन्दः। (पुनरपि मार्गारिटं प्रति गभीरां दृष्टिं निक्षिप्य, जलदगम्भीर-स्वरेण) का वात्र भीतिः ? "ईश्वरोऽस्ति" एतत् तत्त्वं सत्यं चेत् किं वान्यत् प्रयोजनीयम् अस्माकं जगति ? परन्तु, तत् तत्त्वमसत्यं चेत् किं वा फलम् अस्माकं जीवनस्य ?

मार्गारिट्। (पूर्ववत् स्वगतम्) अहो पुनरपि स मय्येव दृष्टिं निक्षिपति। तस्य करुण-कोमल-नयनयोः कमल-कनक-किरणो मामेव अभिनन्दति, मामेवाह्वयति, मामेवोद्वेलयति।

अहो अत्याश्चर्य-भावावेगेन प्रायेण मूर्छापन्नाहम्! ततो यामि, यामि, यामि मम निभृत-प्रकोष्ठे चिन्तनार्थम्—यामि यामि मामि। (वेगेन प्रस्थिता)

इति द्वितीयदृश्यम्।

—०—

## तृतीय-दृश्यम्

[ निवेदितायाः श्रीगुरु-वरणम् ]

स्थानम्—स्वामि-विवेकानन्दस्य लण्डनस्थ-गृहस्यातिथिप्रकोष्ठः ( ड्रयिंरुम् )।

समयः—प्रभातम्।

[ लेखनरतः स्वामि-विवेकानन्दः ]

विवेकानन्दः। ( लेखनं समाप्य पठति ) "नाहं नव-धर्म-प्रचारकः, नाहं नव-सम्प्रदायप्रवर्तकः। परन्तु अहं मम श्रीगुरु-श्रीरामकृष्ण-परमहंसदेवस्य दीनातिदीनो वार्तावहः केवलम् ; तस्योदारोत्तुङ्ग-वाणी-निचयस्य क्षीणातिक्षीणः प्रतिध्वनिः केवलम्। युगयुगान्तर-सञ्चित-पुण्यफलेन यम् अमलालोकं तस्मादेव अहं प्राप्तवान् तस्यैवाणुकणामात्रस्यैव विच्छूरणार्थं यथाशक्ति प्रयते, यम् अनिन्द्यानन्दं तस्मादेवाहम् अनुभूतवान् तस्तैवाणुकणामात्रस्यैव प्रकाशनार्थं यथाशक्ति प्रयते, यदमितामृतं तस्मादेवाहम् आस्वादितवान् तस्यैवाणुकणामात्रस्यैवसेचनार्थं यथाशक्ति प्रयते—न ततोऽधिकं। अयमेव मम जीवन-यज्ञः ; अयमेव मम प्राणप्रमोदः ; अयमेव सम रुधिर-रसः—नान्यत् किञ्चित्, नान्यत् किञ्चित्।"

( पाठं समाप्य मस्तकं सञ्चालयन् ) न, न, न। न मम मनोभावः सामान्यमात्रमपि व्यक्तोऽत्र। सत्यं, कथं मम सङ्कीर्णाः साधारण्यो वाचः श्रीगुरुदेवस्य अनन्यासीम-स्वरूपं प्रकटयितुं पारयिष्यन्ति ? किं क्षणभङ्गुर-काचखण्डं शक्नोति प्रचण्ड-प्रदीप्त-दिनकरस्य मयूखमालां प्रकाशयितुम् ? किं क्षीणप्राणः खद्योतः शक्नोति प्रसन्न-प्रवर-सुधाकरस्य ज्योत्स्नाजालं प्रतिफलयितुम् ? ततः किं करोमि, किं करोमि ?

विवेकानन्दः— ( सङ्गीतम् )

श्रीगुरुः मम प्राणप्रदीपः
श्रीगुरुः मम मानसरसः।
श्रीगुरुः मम संसाराधिपः
श्रीगुरुः मम जीवनहसः॥

श्रीगुरुः मम सुमोहन-स्मृतिः
श्रीगुरुः ममः शोभन-कृतिः ।
श्रीगुरुः मम सुगहन-प्रीतिः
श्रीगुरुः मम लोभन-धृतिः ॥
श्रीगुरुः मम सेवा-साधना
श्रीगुरुः मम शुद्धि-सिद्धिः ।
श्रीगुरुः मम देवाराधना
श्रीगुरुः मम वुद्धि-ऋद्धिः ॥

( द्वारे कराधातः )

विवेकानन्दः । कस्तत्र भो ! आगच्छतु कृपया, आगच्छतु अभ्यन्तरम् ।

( ततः प्रविशति त्रस्त-व्यास्ता मार्गारेट् )

विवेकानन्दः । ( आश्चर्यान्वितः ) सुप्रभातं कुमारि नोवल् ! किन्तु कथं भवती उद्विग्नेव परिलक्ष्यते ? किं संघटितम् ?

मार्गारेट् । ( आत्मानं प्रसमय्य ) सुप्रभातं स्वामिमहोदय ! कृपया क्षमतां मां भवान् । अहं जाने यद् भवान् सर्वदा भृशं कर्मव्यस्तः । तथाप्यहम् अत्रागता भवन्तं पर्याकुलयितुम् । एतदर्थमतीव लज्जिताहम् ।

भवतु, मम कर्माणि अपेक्षितुं पारयन्ति, न भवतः । ततः समापयतु भवान् भवदारब्धं कर्म । ततः परं भवता सह समालपनादिकं भविश्यति ।

विवेकानन्दः । भद्रे ! कर्माणि सर्वेषां समानानि—भवत्या ममान्येषाञ्च । न किमपि कर्म अपेक्षमाणं भवितुमर्हति ।

भवतु, भवती जानाति, अन्ये च सर्वे जानन्ति किल, यन्मम जीवनस्य एकमात्र-कर्म श्रीरामकृष्णपरमहंस-देवस्य शिक्षायाः प्रचारः प्रसारश्च। किन्तु, अहो मम दौर्भाग्यम्! न कृतकार्योऽहम् अस्मिन् विषये विन्दुमात्रम्। न पारयामि अशक्तोऽधन्योऽयं तस्य माहात्म्यम् उद्भासयितुं वाक्येनापि लेखनेनापि।

प्रत्येकचिन्ता प्रतिलेखनं मे
प्रत्येकवाणी च गुरोः कृपैव।
तच्चिन्तया तेन विलेखनेन
तया च वाण्या स कथं प्रकाश्यः ॥२४

यद्वा,

कृशा हि चिन्ता वचनं लघीयो
नात्युर्जिता लेखनपद्धतिर्मे।
कथं समर्थानि भवन्तु वक्तुं
गुरोर्महत्वं परमस्य पुंसः ॥२५

मार्गारेट्। आर्य! भवान् स्वयमेव सर्वदा कथयति यत्, पृथिव्या न कोऽप्यशक्तोऽधन्यश्च। ततः कथमद्य भवान् ईदृश-नैराश्यग्रस्तो जातोऽकस्मात्?

विवेकानन्दः। (सावेगम्) श्रीश्रीगुरुदेवविषयक-चिन्तन-मात्रेणाप्यहं निराशो भवामि। समुद्र-समीपे गोष्पदं यथा श्रीगुरु-समीपे अहमपि तथा, केवलं तथैव।

स एव हि मम सर्वं, मम सर्वस्वं, मम सर्वस्वरूपः। किं न स मम, किं न? स एव हि मम माता पिता भ्राता भगिनी आत्मीयो बान्धवः।

स एव हि मम नासिकायां निःश्वासः, मम हृत्पिण्डे स्पन्दनं, मम धमन्यां रक्तस्रोतः ममास्थिषु मज्जा ।

स एव हि मम वदनस्य हास्यं, मम करयोः शक्तिः, मम कण्ठस्य वाणी, मम वक्षसो बलं, मम पादयोर्गतिः ।

स एव हि मम देहे प्राणाः, मम मनसि बुद्धिः, मम हृदये प्रेम, मम चित्ते शान्तिः । पुनरपि कथयामि—स एव हि मम सर्वं, मम सर्वस्वं, मम सर्वस्वरूपः । किं न स मम, किं न ? ( भावावेगेन मुह्यमानो भवति । )

मार्गारेट् । श्रद्धेय महोदय! समाश्वसितु समाश्वसितु भवान् । कथं भवान् अकारणम् आत्मानं व्याकुलीकरोति ? भवान् स्वयमेव श्रीरामकृष्णपरमहंस-देवस्य साक्षात् प्रतिच्छविर्जीवन् विग्रहश्चलन्ती प्रतिमा । भवत उपस्थितिरेव श्रीरामकृष्ण परमहंहदेवस्य महा महिमानं प्रकटयितुं पारयति ।

विवेकानन्दः । ( आत्मानं प्रशमय्य ) धन्यवादः । किन्तु स्वार्थपरोऽहं केवलं मद्विषयकम् एव वृत्तान्तं भणामि । क्षमतां माम् । ततः कथयतु भवती भवद्विषयकं वृत्तान्तम्, कथयतु कृपया ।

मार्गारेट् । ममापि वृत्तान्त एक एव—गुरुपदाश्रयणम् ।

विवेकानन्दः । ( विहस्य ) भवत्यपि भारतीय-पथानुसारेण अहमपि कामये यच्छ्रीगुरोराशाः सर्वदा क्षरतु भवन्मस्तके ।

मार्गारेट् । किन्तु भवान् न वाञ्छति मद्गुरोर्नाम ज्ञातुम् ?

विवेकानन्दः। न वाञ्छामि। अयं भवत्या व्यापारो न मम, नान्येषाम्। यतो गुरु-शिष्यसम्बन्धोऽन्तरङ्गतमो गोपनीयतमश्च। नात्र वहिरागत-हस्तक्षेपो वाञ्छनीयः।

मार्गारिट्। (सावेगम्) श्रीगुरुदेव! श्रीगुरुदेव! अहं भवतः शिष्वत्वं याचे। कृपां वर्षतु मयि भगवन्।

विवेकानन्दः। सौम्ये! आवाम् उभौ श्रीरामकृष्णपरमहंसदेवस्य शिष्यपदवाच्यौ। ततो नाहं तव गुरुः। तव गुरुस्तु जगद्गुरुः श्रीरामकृष्णपरमहंसदेवः, नान्यौ नान्यः।

मार्गारिट्। अहम् एतद्विषये किमपि न जाने। अहं जाने केवलं मम श्रीगुरुं विश्वविवेकरूपं स्वामि-विवेकानन्दम्।

अहो सकल-कामना मम चिराय पूर्णाधुना
भृता सकल-साधना सकलमद्य सिद्धं तपः।
गुरोश्चरणपङ्कजं तदहमाश्रयं लब्धवती
वदन्ति विदुषां गणा यदमृतं हि सर्वोत्तमम्॥२६

गुरोश्चरणमेव मे सकल-तीर्थस्थलं
चिरप्रिय-सुरालयश्चिरसुखात्मक-ब्रह्मभूः।
तदाननविलोकनं मम हि देवसन्दर्शनं
तदीयवचनं श्रुतिर्मम सुधास्तदीयाशिषः॥२७

विवेकानन्दः। भवतु तत्, भवतु तत्। श्रीगुरु-कृपावर्षणन्तु विभिन्नं विभिन्नक्षेत्रे—भवति तत् साक्षाद् भवति च परोक्षम्। सूर्यालोकः पतति साक्षाद् गृहशीर्षे, पतति च परोक्षं गृहकोणे गवाक्षमाध्यमेन। किन्तु तत्र का क्षतिः? उभयत्रैव तस्य समानं तेजः समानस्तापः। तथा यदि त्वं मन्माध्यमेन श्रीरामकृष्ण-सूर्यस्य तेजो

धर्तुं तापं हर्तुम् इच्छसि ततोऽहमपि मां कृतकृतार्थं गणयिष्यामि—न्यस्तभारं गच्छितधनञ्च चिन्तयिष्यामि। त्रिभुवनस्य सकलजनार्थं स तस्य दिव्य-जीवनस्य महारत्नं सानुग्रहं मह्यं दत्तवान्। ततो यदि नाहमन्येभ्यस्तद्ददामि ततोऽहं गच्छित्वापहरण-दोषलिप्तो भविष्यामि।

मार्गारिट्। श्रीगुरुदेव! किमधुना मया करणीयम्? अत्र वा भारते वा मम भविष्य-कर्मसूची चलिष्यति? अतः परं नाहं कामये मुहूर्तं मात्रमपि वृथा व्ययितुम्।

विवेकानन्दः। शुचिस्निग्धे! मा व्याकुला भव, मा अधैर्या भव। सर्वेषामेव प्रयोजनीया प्रारम्भिकी प्रस्तुतिः; सर्वेषामेवास्ति कालाकालभेदः। ततः प्रस्तुतिसहकारेण अपेक्षस्व वत्से! धीरम् अपेक्षस्व। आह्वानन्तु आगमिष्यति यथासमयं निश्चितम्। को जानाति कदा मन्दिरद्वारं स्वत एवोद्घाटितं भविष्यति, कदा पूजा-प्रदीपः स्वत एव प्रज्वलितो भविष्यति, कदा वा पूजाधूपः स्वत एव सुस्थितो भविष्यति, कदा च पूजाशङ्खः स्वत एव निनादितो भविष्यति। न जाने कस्मिन् विशेष-शुभक्षणे स एवालोक उद्भासितं करिष्यति तमिस्राच्छन्नं हृदय-गह्वरम्, स एव सुरभिरामोदितं करिष्यति शुष्क-शून्यं जीवनोद्यानम्, स एव स्वर्णनिर्झङ्कृतं करिष्यति नीरव-नीरसं प्राणकन्दरम्।

न जाने कस्मिन् मिलनलग्ने आगमिष्यति प्रियतमस्य मधुरमोहामन्त्रणम्। न जाने, न जाने। ततोऽपेक्षस्व वत्से! अपेक्षस्व धीरम्।

वत्से ! त्वं भगवत्कृपाङ्कित-जनश्चिन्ता न ते युज्यते
मार्गं दर्शयताऽचिरेण भवतीं ब्रह्म स्वयं निष्कलम् ।
शक्तिं ते प्रबलां विधाय सफल-क्षेमैकसम्पादिनीं
नारीजन्म तवेदमाशु सफलं सम्पादयेदञ्जसा ॥२८

एष्यत्यर्कः कमलकलिकां बोधयिष्यन्, सुधांशु-
र्नूनं यास्यत्युदयशिखरं तर्पयिष्यंश्चकोरीम् ।
मुग्धी कर्तुं हरिणतरुणीं वादिता स्याच्च वंशी
वर्षा नीपं पुलकललितं कर्तुमेष्यन्त्यवश्यम् ॥२९

धारणक्षम-सत्पात्रे सति पूरयितुं हि तत् ।
सम्पद उपयुक्ताया नाभावो विद्यते क्वचित् ॥३०

मार्गारेट् । तदेव करिष्यामि देव ? तदेव करिष्यामि ।

(प्रस्थिता)

सङ्गीतम्

(भक्तगायकः)

(श्रीविवेकानन्द-वन्दना)

सारदामणि-शुभ-सुतं रामकृष्ण-पद-पूतं
नौमि विवेकानन्दम् ।
भारत-संस्कृति-भूतं जाग्रत-मैत्री-दूतं
विशाल-वसुधा-वन्द्यम् ॥
विश्व-प्रेम-प्रचारकं निःस्व-क्षेम-प्रसारक
आनन्दामृत-कन्दम् ।
सकल-कालुष-हारकं विकल-मानुष-तारकं
दलित-द्वेष-द्वन्द्वम् ॥

ज्ञान-भक्ति-कर्म-चितं  ध्यान-शक्ति-धर्म-जितं
मधुर-त्रिमार्ग-सन्धम् ।
ईश्वर-पादाब्ज-नीतं  नश्वर-संसार-हितं
छिन्न-कठिन-भव-बन्धम् ॥

इति तृतीय-दृश्यम् ।

———०———

## चतुर्थ-दृश्यम्

[ निवेदिताया महाह्वानलाभः ]

स्थानम्—मार्गारेट् गृहम् ।

समयः—प्रभातम् । ७ जुन, १८९६ खीष्टाब्दः ।

( ततः प्रविशति आनन्दोच्छलिता मार्गारेट् )

मार्गारेट् । अहो ! मनोहरः खल्वयं दिवसः । मधुर-मोहनो ग्रीष्मकालः समायतः । तस्य कनक-किरण-शरैर्निमेषेण पलायिता कराल-कुटिल-शीतस्य कृष्ण-कलुष-कुज्झटिका सभयम् । बहुकाला-दनन्तरं लसति अवगुण्ठनविमुक्ता गगन-ललना नील-वसनधारिणी निखिलहृदय-हारिणी निविड़-पुलकचारिणी च । खेलति तया सह चतुर-चटुलः पवनश्चपल-गानगायकः । गुञ्जुन्ति मञ्जु-कुञ्जेषु

भ्रमरपुञ्जा मञ्जीरताना: । कूजन्ति कम्र-विहगाः कोमल-रणनाः । काशन्ते कुसुमकलिकाः केलिकमनाः ।

अहो ! मम मनसो महानन्द एव प्रकटितः सर्वत्र वहिर्विश्वे ।

( आनन्दमय-वन्दना )

ब्रह्मानन्दं भज सच्छन्दं वीतविभेदं सान्द्रम् ।
निष्कलमनघं सततोल्लाघं विरहितभागमतन्द्रम् ॥३१

सुखमयममृतं विशोक-विततं राजति सततं भुवने ।
तटिनीभङ्गे पर्वततुङ्गे रविकररङ्गे पवने ॥३२

रजनीतिमिरे शैशिरविसरे प्रदीप्तदहने गहने ।
हे मम मन आचर मज्जनमिह हि निरिन्धन-दहने ॥३३

निश्चिन्ताहं निर्भयाहं निरङ्कुशाहं श्रीगुरुदेव-चरणे सर्वस्व-समर्पणात् ।

अहो मनो मे कथयति यदद्याहं निश्चितमेव कञ्चन शुभ-संवादं प्राप्स्यामि ।

( द्वारे कराघातः )

मार्गारेट् । कस्तत्र भो ? आगच्छतु भवान्, प्रविशत्वत्र स्वाच्छन्द्येन ।

( ततः प्रविशति पत्रहस्तः सेवकः गुड्उइन् )

मार्गारेट् । अहो ! स्वामि-विवेकानन्दस्य विश्वासभाजनः सेवकः गुड्उइन् आगतः ! असीमं सौभाग्यं मम ! कः संवादः ?

कुत्राद्य स्वामी विवेकानन्दमहोदयो भाषणं दास्यति ? गन्तुकामाहं तत्र ।

गुड्उइन् । सुप्रभातम् ! किन्तु स्वामि-विवेकानन्द-महोदयस्य भाषणम् अत्र सन्ध्यायां नास्ति । यतोऽद्येव वयं लण्डन-नगरीं त्यक्त्वा फ्रान्सदेशं गमिष्यामः । ततो जार्मणी-सुइजारल्याण्ड-प्रमुख-देशान् वयं गमिष्यामः ।

मार्गारेट् । कदा यूयं प्रत्यावर्तिष्यध्वे ?

गुड्उइन् । न जाने । मन्ये रोम-नगरीपरिदर्शनानन्तरं स्वामि-महोदयः लण्डनं प्रत्यावृत्य कतिपय-दिवसान् अत्रैव स्थास्यति ।

भवतु, मान्य-महोदये ! स्वामि-महोदयेनेदं पत्रं दत्तं भवदर्थम् । गृह्यतां तत् कृपया ।

मार्गारेट् । ( विहस्य ) भद्र ! मम कृपायाः का कथा ? अहमेव भवत्कृपाप्रार्थिनी, यतो यूयं सन्न्यासिपदाश्रिताः । ईदृश सौभाग्यशालिनो जना एव दग्ध-संसार-मरुभूमौ शान्तिजलधारा-वर्षकाः सर्वदा । भवतु, ददातु कृपया भवान् मह्यं पत्रमिदम् ।

( गुड्उइन् तथा करोति )

मार्गारेट् । धन्यवादः । स्वामि-महोदयं मम श्रद्धाभिवादनं विज्ञापयतु भवान् सानुग्रहम् ।

गुड्उइन् । निश्चितं तत् करिष्ये । नमस्कारः ।

मार्गारेट् । नमस्कारः । ( गुड्उइन् बहिर्गच्छति )

मार्गारिट् । ( पत्रं सश्रद्धं मस्तके वक्षसि च निदधाति, कियत्-कालं निस्तब्धं तिष्ठति, ततः पत्रस्यावरणमुन्मोच्य पठति )

( विवेकानन्दस्य कन्ठस्वरः )

"प्रिय-कुमारि नोव्ल् ! ममादर्शो हि संक्षेपेणेत्थं प्रकाश योग्यः—मानवस्य निकटे तस्यान्तर्निहित-देवत्वस्य प्रचारः, जीवनस्य प्रत्येककर्मणि तद्देवत्व-विकाशस्य पथि निर्धारणञ्च ।

त्वयि जगदालोड़नकारिणी शक्तिर्निहिता आस्ते । क्रमश ईदृशा अन्ये बहवोऽपि जना आगमिष्यन्ति । वयं कामयामहे वलिष्ठं वाक्यं वलिष्ठतरं कर्म च ।

हे महाप्राणे ! उत्तिष्ठ ! जागृहि ! जगत् साम्प्रतं यन्त्रणा-दग्धम् । किं शोभते निद्रा त्वयि ? आगच्छ, यावन्निद्रिता देवता न जागरिता भवति, यावदन्तरस्था देवता नास्माकम् आह्वानस्योत्तरं ददाति तावद् वयं ताम् आह्वयामः । अस्मान्महत्तरं किं वा वर्तते जीवने ?

केवलं वदामि जागृहि जागृहि !"

मार्गारिट् । ( भावाविष्टा ) अहो परम-सौभाग्यं मम ! श्रीगुरु-स्वामि-विवेकानन्देन कथितम्—"अपेक्षस्व वत्से ! धीरम् अपेक्षस्व ! आह्वानं तु आगमिष्यति यथासमयम्" ।

तदेवागतम् अद्यास्मिन् आलोकोज्ज्वले आनन्दोत्फुल्ले अमृत-मञ्जुले प्रभातकाले । अहो सीमाहीनं मम शुभादृष्टम् !

"हे महाप्राणे ! उत्तिष्ठ ! जागृहि ! जगत् साम्प्रतं यन्त्रणादग्धम्—किं शोभते निद्रा त्वयि ।"

इदमेव मम परम-देवताया महाह्वानम्, इदमेव ममान्तरस्थ-देवताया महामन्त्रणम् । नात्र सन्देह-लेशोऽप्यस्ति ।

अनेनाह्वानेन जागरिता भवतु मम निद्रिता देवता, उत्तरं ददातु ममान्तरस्था देवता ।

कृतसङ्कल्पाहं जाता । न मम मनसि विद्यते द्विधा-संशय-लेशोऽप्यद्य । दृढसङ्कल्पाहं जाता ।

मनोविपञ्च्या मम नीरवाया
निमेषमात्रेण हि सर्वतन्त्रीः ।
चकार झङ्कारवतीर्विशेषाद्
गुरोर्महाह्वानमतिप्रशान्तम् ।
ताश्चाधूना मे हृदयान्तराले
आरावमेकं जनयन्ति नित्यम् ॥३४

"उत्तिष्ठ जागृह्यपनीय मोहं
ध्वान्तं महाज्ञानमयं निरस्य ।
तं वासना-सागरमाशु तीर्त्वा
निर्वाप्य हिंसानलमुल्वणम्" ॥३५

( प्रविशति मिस् हेन्रियेटा मूलार् )

मिस् मूलार् । ( विहस्य ) भगिनि । कस्मिन् विषये कृतसङ्कल्पा दृढसङ्कल्पा च जाता ?

मार्गरिट् । सुस्वागतम् ! मिस् हेन्रियेटा मूलार् सुस्वागतम्-अस्मिन् क्षणे तवागमनम् अतीव कल्याणजनकम् शुभसूचकञ्च ।

शृणु भगिनि ! अहं स्वामि-विवेकानन्द-महोदयस्य महाव्रते जीवनोत्सर्गं कर्तुं कृतसङ्कल्पा, अहं भारतं गत्वा भारतवासिनां

सेवायाम् आत्मानं निवेदयितुं दृढ़सङ्कल्पा। यस्मिन् मुहूर्ते स्वामि-विवेकानन्द-महोदयो मां भारत-गमनायादेक्ष्यति तस्मिन्नेव मुहूर्तेऽहं तत् करिष्यामि।

मिस् मूलार्। (सानन्दम्) अतीव मङ्गलजनकोऽयं सङ्कल्पः। मयापि ईदृश-सङ्कल्पो गृहीतः। त्वां सङ्गिनीरूपेण प्राप्याहम् आत्मानं सफलतरां मन्ये।

भगिनि! अपूर्वं खलु स्वामि-विवेकानन्दस्य महाह्वानम्! अतीव साधारणी नारी अहम्। तथापि स्वामि-महोदयस्य सस्नेहाह्वानेन मम जीवनस्य श्रेष्ठं सत्यं श्रेष्ठं सौन्दर्यं श्रेष्ठमैश्वर्यञ्च निमेषेण जागरितानि जातानि।

भगिनि! एकदा त्वं परिहासच्छलेनावदः यत्, स्वामि-महोदय ऐन्द्रजालिको महामायावी वा। किन्तु नेदं परिहासयोग्यम्, इदं सत्यतमं तत्त्वम्—यतः केवलम् ऐन्द्रजालिको महामायावी वा ईदृशरूपेण अघटन-घटनपटुः, नान्यो नान्यः।

मार्गारेट्। सत्यं, सत्यम्, पूर्णसत्यम्। शुष्क-तप्त-मरुभूमौ पुष्पं विकाशयितुं, अटल-कठिन-पर्वतं भित्त्वा नदीं प्रवाहयितुम्, अन्धरन्ध्र-खनिगर्भे विद्युद्दाम प्रकटयितुं वा कः समर्थः ऐन्द्रजालिकं विना?

मिस् मूलार्। अपूर्वा तवोपमा! अस्माकं शुष्क-तप्त-जीवन-मरुभूमौ स एवानन्द-पुष्पाणि प्रस्फोटितवान्, अस्माकम् अटल-कठिन-प्राण-पर्वतान् भित्त्वा स एव भक्ति-मन्दाकिनीं प्रवाहितवान्,

अस्माकम् अन्ध-रन्ध्र-मनःखनिगर्भे स एव ज्ञानालोकं प्रज्वालितवान् ।

हे असाध्य-साधक श्रेष्ठ ऐन्द्रजालिक ! हे सर्वं शक्तिधर महामायिक ! भवच्छ्रीपादपद्मे शत-सहस्र-प्रणामान् विज्ञापयामि !

( श्रीगुरुवन्दना )

भज गुरुचरणं मर्दितमरणं जननोद्धरणं शान्तम् ।
तर भववारिधिमतलं निरवधिमेष्यसि न तु पुनरन्तम् ॥३६

शिरसि तवास्ते नियतं शस्ते सरसिजमेकं कान्तम् ।
यत्र गुरुस्ते नियतमुपास्ते द्व्यक्षर-हंसं भान्तम् ॥३७

गुर्वणुकम्पा यदि तेऽकम्पा शतमपि शम्पा तान्तम् ।
यदि गुरुरास्ते रोषपरस्ते रोत्स्यसि कस्ते ध्वान्तम् ॥३८

इति चतुर्थ-दृश्यम्

——०——

## पञ्चम-दृश्यम्

[ निवेदितायाः श्रीश्रीसारदामणिदेव्याः साक्षात्कारलाभः ]

स्थानम्—श्रीसारदामणिदेव्याः कलिकातान्तर्गत-वागवाजारस्थं गृहम् ।

समयः—प्रभातम् । १७ मार्च, १८९८ खीष्टाब्दः ।

( भक्तवृन्देन सह कथोपकथनरता श्रीसारदामणिदेवी )

भक्ता । मातर्मातः ! अशेष-क्लेश-क्लेदमथितम् अधन्यं मम जीवनम् । अतीव साधारणी नारी अहम्, शिक्षा-दीक्षाविहीना, ज्ञान-भक्तिदीना, शक्ति-कृतिक्षीणा च । कमपि साधनपथम् अवलम्बितुं नास्ति मे सामर्थ्यम् । ततः किं करोमि मातः ! किं करोमि ?

सारदा । ( सस्नेहम् ) परमादरिणि कन्यके मम ! न त्वं साधारणी नारी—दीनहीना, क्षुद्रक्षीणा दुर्बला दुर्दशाग्रस्ता च । त्वं स्वयं जगज्जननी ।

भक्ता । ( सविस्मयम् ) "जगज्जननी" ? किं कथयति भवती ? जगज्जनन्याः कीटाणुकीटकल्पा भक्ताहं कथं स्वयं जगज्जननी भवेयम् ? अत्याश्चर्यमिदं तत्त्वम् ।

सारदा । ( सस्नेहम् ) वत्से ! किं त्वया विस्मृतः श्रीश्री-ठक्कुरस्य महानिर्देश एतद्विषये ?

"उच्चनीच-पण्डितमूर्ख-ब्राह्मणशूद्र-निर्विशेषेण प्रत्येक-नारी आद्याशक्तेः प्रतीकभूता, जगज्जनन्याः, प्रतिच्छविरूपा परम-मातुः सजीव-प्रतिमासमा ।"

ईयमेव श्रीश्रीठक्कुरस्यामृतमयी वाणी ] ततो मा भैषीः, मा नैराश्यग्रस्ता भव, मा दौर्बल्यम् आश्रय ।

शक्तिस्त्यागस्य सेवायाः प्रेम्नश्चापि विनिश्चिता ।
तासामाधारभूतेयं नारी शक्तिमती चिरम् ॥२१

सा निर्भया हि पुरतः सर्वेषां स्थास्यति स्थिरा ।
तेजसाऽस्याः पवित्रेण पराभूतं भवेज्जगत् ॥४०

नारीशक्त्याऽनया भूयः शक्तिमद् भूवनत्रयम् ।
भविष्यति यतो मातृ-शक्तिरेषाऽपराजिता ॥४१

भक्ता । रोमाञ्चकारिणो इयं वाणी ! किन्तु को मम मोक्षोपायः ? कृपया वदतु तं स्नेहमयि जननि !

सारदा । उपाय एक एव । अज्ञानावरणोन्मोचन-प्रचेष्टा ।

भक्ता । सा वा कीदृशी ? मातः ! कृपया वदतु तत् ।

सारदा । जपः—"जपात् सिद्धिः" इत्यस्माकं शास्त्रविधिः । अत एव जपो नित्यं करणीयः सर्वाभिरेव । जपान्मनः स्थिरं भविष्यति, स्थिरे मनसि च ज्ञानालोकः स्वत एव प्रकाशितो भविष्यति ।

भक्ता । अपूर्वा खलु भवत्या वाणी ! परम-करुणाघने जननि ! तदेव करिष्याम्यहम्, तदेव करिष्याम्यहम्, तदेव करिष्यामि निश्चितम् ।

( सहसा उन्मुक्त-द्वारं प्रति दृष्टिं निक्षिप्य )

मातर्मातः ! पश्यतु, भवती पश्यतु ? विचित्र-वेश-धारिण्यस्तिस्रः इयोरोपीय-महिला अत्रागच्छन्ति । किं करोमि, किं करोमि ?

सारदा । वत्से ! मा उद्विग्ना भव । भीतेः किं कारणम् ? मन्ये इमास्तिस्र इयोरोपीय-महिला नरेन्द्रस्य विदेशिन्यः शिष्याः ।

मया सह मेलयितुम् एता अत्र प्रेरिता नरेन्द्रेण । ततस्ताः ससम्मानम् अभ्यर्थनीयाः ।

( ततः प्रविशन्ति त्रस्त-व्यस्ताः मिस् मार्गारिट् नोव्ल्; मिस् म्याक् लयेड्, मिसेस् औमिवुल् । )

मार्गारिट् । ( सम्मुखे परिलोक्य ) अहो ? इदमेव युग-जनन्याः श्रीसारदामणिदेव्याः पूत-वासगृहम् ? रोमाञ्चित-कलेवरा जाताऽहम् अकस्मात् ।

( द्रुतं निश्वसिति )

मिस् म्याक् लयेड् । सौम्ये ! किं सञ्जातम् ? सहसा त्वं भृशम् उत्तेजिता इव दृश्यसे, तत् कथम् ?

मार्गारिट् । किं नानुभवति भवती यदाद्योपान्तं रोमाञ्च-करम् इदं स्थानम् ?

मिसेस् ओलिवुल् । "रोमाञ्चकरम् ?" तत् कथम् ? परन्तु अतीवापरिष्कृतं स्थानमिदम् ।

म्याक्लयेड् । सत्यं सत्यम्, स्तूपीकृतोच्छिष्ट-परिपूर्णं मल-लिप्यं दुर्गन्धमयं जीर्ण-शीर्ण-विवसन-बालकाध्युषितं पन्थानम् अति-कष्टेनातिक्रम्य वयमत्र समुपस्थिताः । किन्तु कथं श्रीसारदा देवी निवसत्यस्मिन् न्यक्कारजनकस्थाने ?

मार्गारिट् । अपि न बुध्यते तद् भवती ? सा दीनजनसेवका ततो दीनावास एव तस्याःशाश्वती उपस्थितिः । भवतु, गच्छामि तत्समीपे । ( उपसृत्य )

मातः ! प्रणमामि । अहं भवत्या विदेशिनो कन्या मार्गारिट् । इयम् अभिजातवंशीया विपुल-विभवा मिसेस् औलिवुल् । इयञ्च ज्ञान-विज्ञान-निष्णाता मिस् म्याक् लयेड् ।

( सर्वाः प्रणमन्ति )

मार्गारिट् । वयं सर्वाः सुदूरात् इंलण्ड-देशादत्रागता भारत-जनन्याः सेवार्थम् ।

सारदा । ( प्रतिनमस्कृत्य ) कल्याणं वो भूयात् । वत्साः ! अहं न जाने युष्माकम् इंराजीभाषाम् । ततोऽहं युष्माभिः सह साक्षादालापनादिकं कर्तुं न पारयामि । भवतु, ( हस्तेन निर्दिश्य ) अत्रोपविशत यूयम् । काऽत्र भो ! आनय आसनानि एतदर्थम् ।

( काचित् महिला त्रीन् कटान् तासां सम्मुखे स्थापयति, तास्तत्रोपविशन्ति )

( सर्वाः परस्पर-मुखावलोकिन्यस्तूष्णीं तिष्ठन्ति । श्री-माता सारदामणिः सस्मितं सस्नेहं ता अवलोकयति )

मार्गारिट् । ( निपुणं दृष्ट्वा जनान्तिकम् ) अहो ! अभिनवा अपरूपा अत्याश्चर्येयं श्रीमातृमूर्तिः । तुषार-शुभ्र-वसनधारिणी अवगुण्ठनवती लम्बित-कृष्ण-केशा अलक्तकराग-रञ्जितपदा मूर्ति-मती लक्ष्मी-सरस्वतीरूपा सा राजते विश्वमातृरूपेण । दर्शन-मात्रेण वायुचालित-तृणगुच्छ इव अस्माकं मस्तकानि लुण्ठितानि भवन्ति तस्याः श्रीचरणारविन्दे ।

अत्युच्च-शिक्षापरिशुद्धबुद्ध्या
पाश्चात्त्य-नार्या गुणरूपवत्या ।

मयाऽपरिच्छन्न-गृहेऽत्र दृष्टा
महीयसी काचिदियं महेला ।।४२

यस्याः पदाब्जे शिर उन्नतं मे
प्रह्वीभवद् वेदयतेऽद्य पूजाम् ।
कथं ममायं वत भाववेगो
न तत्त्वतस्तामधुनापि वेद्मि ।।४३

व्यापार आश्चर्यकरोऽयमास्ते
भावोद्भवोऽज्ञात-जनेऽपि यन्मे ।
यथा ह्यविज्ञात-निदान-वेणु-
ध्वनेः कुरङ्गी समुपैति मोहम् ।।४४

अहो ! अद्य परमशुभदिवसः, सेन्ट-प्याट्रिक्स्-डे"—मम जीवनश्च श्रेष्ठः दिवसः ।

सारदा । ( इंराजीभाषाभिज्ञां भक्ताम् उद्दिश्य ) वत्से ! भव त्वम् अस्माकं द्विभाषिक-पदाभिषिक्ता ।

भक्ता । सानन्दम्, मातः, स्वच्छन्दम ।

सारदा । विदेशिन्यः कन्यका मम ! परमानन्दिताहं युष्माकं सरल-पवित्राननानि दृष्ट्वा । मन्ये, नरेन्द्रस्य शिक्षागुणेन यूयं स्वयं श्रीठक्कुरं मनसि स्थापयितुं समर्थाः ।

मार्गारेट् । मातः ? न वयं तादृश-सौभाग्यशालिन्यः अधुनापि । अद्यापि अस्माकं हृदयमन्दिराणि न सम्मार्जितानि सुष्ठुरूपेण । अद्यापि तत्र तिष्ठन्ति स्तूपीकृताः काम-क्रोध-लोभ-मोह-मद-मात्सर्य रूपाः पूतिगन्धमया मलाः । अद्यापि तत्र चरन्ति

हिंसाद्वेषादि-द्वन्द्वरूपा हिंस्राः श्वापदाः। अद्यापि तत्र वहन्ति क्रूरता-कुटिलता-नीचतारूपा विषाक्ताः पवनाः।

मातर्मातः ! कथमस्मिन् दुर्गन्ध-मललिप्ते श्वापदसङ्कुले विषवाष्पमथिते मनसि श्रीभगवतः अरुण-किरण-चरणक्षेपः सम्भवति ?

सारदा। वत्से ! मा पर्याकुला भव। अहं निश्चितं जाने यत् युष्माकं मनांसि नेदृशानि मललिप्तानि। तथापि वदामि—ईदृशेषु पापलिप्तेषु मनःस्वेव परम करुणामये-परमेश्वरस्य शुभाविर्भावः संघटते विशेषरूपेण। अन्यथा कथं स पापिशरणो दीनतारणो हीनभरणो जगत्त्राता ?

मिस् म्याक्लयेड्। ममताघने मातः ! सर्वमहं बुध्ये। भवज्ज्ञानालोकेन विदूरीभूतमस्माकम् अज्ञान-तमिस्रम्।

सारदा। वत्साः ! का युष्माकं पूजाप्रणाली ? केन विधिना यूयं देवताम् अर्चयथ प्रार्थयध्वे च ?

मिसेस् ओलिवुल्। मातः ! वयं ख्रीष्टानाः साकार-पूजा-विरोधिनो निराकारवादिनश्च। ततो न वयं विग्रहं पूजयामः।

सारदा। तत्र को दोषः ? लक्ष्यम् एकमेव, केवलं पन्थानो विभिन्नाः। पश्य ! सर्व एव गच्छन्ति राजसन्दर्शनार्थम्—एको गच्छति रथेन, अन्योऽश्वेन अन्यो गोशकटेन, अन्यश्च पदव्रजेन। तत्र का वा क्षतिः ? राजसन्दर्शनमेव लक्ष्यम्, उपाया यथा तथा वा भवन्तु। अत एव साकार-वादिनो निराकारवादिनश्च समाना एव।

न्याकुलयेद्। अहो जनन्या असीमा उदारता! साधारण रीण्या निरक्षरा पल्लीवासिन्यपि सा अत्याश्चर्य-विभूतिधारिणी। मन्ये सत्यमेव सा जगजजननी—नेदमत्युक्तिमात्रम् इदमक्षरशः सत्यम् तत्त्वम्।

( ततः प्रविशति फल-मिष्टान्न-पात्रहस्ता सेवका )

सेवका। मातः! अतिथिसेवार्थं फलमिष्टान्न-प्रसादा मयानीताः।

सारदा। परमादरिण्यः कन्यका मम! गृह्णीतेमान् प्रसादान्।

मार्गरिट्। कृतार्था वयम्।

सारदा। सेवका! अहपपि मम नव-कन्याभिः सह प्रसादं ग्रहीष्यामि। आनय मदर्थमपि फलमिष्टान्न-प्रसादम्।

सेवका। ( आश्चर्यान्विता )! मातः अपि भवती विधर्मि-विदेशिनीभिः सहैकत्र आहारं करिष्यति? महदाश्चर्यम्! अतीव धर्मपरायणा निष्ठावती प्राचीन-मार्गानुसारिणी भवती। ततः कथामिदं सम्भवति?

सारदा। वत्से! मा विस्मर श्रीश्रीठक्कुरस्य शिक्षाम्। पृथिव्याः कोऽपि न घृणार्हस्त्याज्यो वा। माताहम्, सर्वे जगद्-वासिनो मम परमादरभाजन-सन्तानाः। उच्चनीच-धनिदरिद्र-पण्डितमूर्ख-स्त्रीपुरुष-स्वदेशीय-विदेशीय-हिन्दुमुसलमानाः सर्वं एव समाना मत्समीपे। अन्यथा कथमहं माता स्याम्? या भेद-दर्शिनी सा न माता भवितुमर्हति, कदापि न।

विद्वानविद्वानबलो बली वा
सुरूप आहो नितराँ कुरूपः ।
पुत्रो जनन्याः सम एव सर्व-
स्तुल्या हि सर्वत्र महत्प्रवृत्तिः ॥४५

स्फुटयति तृणपुष्पं तुच्छमर्कांशुजालं
कमलमपि विशालं देवपूजोपयुक्तम् ।
द्रुममिव सुविशालं मारुतः सर्वगामी
क्षुपमपि कृशकायं कम्पयत्येकवृत्त्या ॥४६

मधु-मधुरफलानां पत-चूतद्रुमाणां
विषम-विषमयाणां वन्य-शाखिव्रजानाम् ।
परिचरणपराऽब्स्ते वृष्टिधारैकदृष्ट्या
कलयति जननीत्थं तुल्यवृत्तिं सुतेषु ॥४७

एतएव वत्से ! मा द्विधा कुरु ; आनय मदर्थं प्रसादं सत्वरम् ।

( सेवका तथा करोति । सर्वा आहार-रताः )

ओलिवुल् । परमस्नेहमयि जननि ! असीम-सौभाग्यम् अस्माकं यद् भवती अस्माभिः सहैकत्र प्रसादं गृह्णाति ।

सारदा । सौभाग्यं ममैव, न युष्माकम् । दीनदरिद्रा निरक्षरा अतिसाधारणी पल्लीवासिन्यहम् । ईदृशी रूपगुणसम्पन्ना अभिजात-वंशीया धनवती इयोरोपीयाः कदा वाहं पुनरपि लप्स्ये ?

( सर्वा हसन्ति )

( ततः प्रविशति स्वाम्वि-विवेकानन्दः )

विवेकानन्दः । विश्वजननि ! गृहाण अधमामध-सन्तानस्य सहस्रकोटीर्नतीः । ( भूलिण्ठित-मस्तकं प्रणमति )

सारदा। वत्स! ममाशिषं गृहाण। उत्तिष्ठ वत्स! उत्तिष्ठ।

विवेकानन्दः। (उत्थाय) परम-करुणाकोमले मातः! इमा विदेशिललना मम मानसकन्याः। ता भवत्या अपि आदृता भविष्यन्तीति मे महत्याशा।

मार्गारेट्। देव! प्रागेव वयं तया सन्तानरूपेन गृहीताः। चिन्तातीतं सौभाग्यं तदस्माकम्। सा सानुग्रहम् अस्माभिः सहालपनादिकं कृतवती, अस्माभिः सह फलमिष्ठान्न-प्रसादान् गृहीतवती च।

विवेकानन्दः। अपि सत्यमेतत्? आशातीतमिदं सर्वम्। सा युष्माभिः सह भोजनादिकमपि करिष्यतीति न मे आसीदाशा।

जयः श्रीमातुर्जयः। जयः श्रीमातुर्जयः।

मार्गारेट्। (भावाविष्टा) जयः श्रीमातुर्जयः। जयः श्रीमातुर्जयः, जयः श्रीमातुर्जयः।

प्राणाधिके जननि! भवतो नित्य-प्रेमपूर्णा। किन्तु भवत्याः प्रेम न अस्मत्प्रेमवद् विश्वजनप्रेमवद् वा उग्रमुत्तप्तम्। इदं प्रेम सर्वमङ्गलकारि, सर्वानिष्ट-चिन्ताविवर्जित-स्निग्ध शान्तिरूपम्। इदं प्रेम लीलाचञ्चलकनकद्युतिरेव।

विवेकानन्दः। सौम्य! अपूर्वा खलु तव हृदयोत्था भावाभिव्यक्तिः।

मार्गारेट्। (पूर्ववद् भावाविष्टा) मातर्मातः! भवती परमेश्वरस्याश्चर्यतमा सृष्टिः, श्रीरामकृष्णस्य विश्वप्रेम-धारण-

पात्रम्, तस्य सन्तानानां निकटे तस्य स्मृतिचिह्नमेव तेषु निर्जन-दिवसेषु ।

स्वल्पामोदावसरं विना अन्यदा वयं शान्त-धीर-नीरवाः स्थास्यामः शान्त-धीर-नीरवाया भवत्याः समीपे—एतदेव सुष्ठु शोभनञ्च । वस्तुतः परमेश्वरस्य आश्चर्याः सृष्टयः सर्वा एव शान्तधीर-नीरवाः—यथा, पवनः, सूर्यालोकः, उद्यानसौन्दर्यम्, गङ्गामाधुर्यञ्च । तानि प्रविशन्ति अस्माकं जीवनेषु नीरवम् अज्ञातञ्च । एतानि शान्त-धीर-नीरब-द्रव्याणि भवत्तुल्यानि ।

विवेकानन्दः । अयि शुचिस्मिते ! पुनरपि कथयामि, अनुपमा हि तव मातृवन्दना । मन्ये, जनन्या वाणीझङ्कारेण अकस्मान्निनादिता तव मनोवीणा सहस्रतानैः । तस्या एव सुमधुर-मूर्छनास्मान् नन्दयति सादरम् ।

मार्गारेट् । देव ! कथं श्रीजनन्या महामहिमानं मनसा बोद्धुं भाषया वा प्रकटयितुं पारयामि ?

अहो ! मन्ये, सा स्वयं श्रीश्रीलक्ष्मीस्वरूपिणी, अस्माकम् अशेष-सौन्दर्य-सौकर्ष-सौभाग्य-दायिनी । कमन-कमल-दलविहारिणीम् इमां श्रीश्रीकमलां वन्दे—शत-सहस्र-कोटिवारं वन्दे ।

विवेकानन्दः । सत्यम् । अहमपि वन्दे ( सङ्गीतम् )

श्रीश्रीकमला-वन्दना

नमामि कमलां कमल-कोमलां<br>
कल्याण-केलि-कमनाम् ।<br>
कमलिनीं-करां किङ्किणी-धरां<br>
कङ्कण-निक्कण-रमणाम् ॥

कुन्दक-दशनां कुङ्कुम-वसनां
काञ्चन-किरीट-लसनाम् ।
कुवलयासनां कलुष-नाशनां
कमनीय-पुण्य-हसनाम् ॥

कुञ्जर-ललितां कौतुक-कलितां
कल-कलहंसी-गमनाम् ।
कल्मष-रहितां करुणा-मथितां
कराल-कृतान्त-दमनाम् ॥

सर्वमेतन्मम महानन्दकारणम् । अतीव सौभाग्यशालिनी त्वम्, यतः स्पर्शमणेः प्रथम-स्पर्शेनैव त्वं सुवर्णीभूता निमेषेण । बहु-समय-साध्यम् इदं सर्वमन्येषां पक्षे ।

मार्गारेट् । एषैव महाजनन्याः कृपा । स्नेहमयि जननि ! प्रणमामि । विदायं याचे साम्प्रतम् ।

ओलिवल्-म्याक्लयेड् । प्रणमामि मातः ।

सारदा । कल्याणं वो भूयात् । ( मार्गारेटमुद्दिश्य ) मातः ! त्वदागमनेनाहं भृशमानन्दिता जाता ।

सेवका । ( आश्चर्यान्विता ) "मातः" ? इयं नवागता विदेशिन्यपि श्रीजनन्या मातृशब्देन सस्नेहं सादरञ्च सम्बोधिता ? परमाश्चर्यम् !

विवेकानन्दः । नैतदाश्चर्यजनकम् । एतदनिवार्यमेव । यतः सर्वा एव ललनाः श्रीजनन्या मातृशब्देन सस्नेहं सादरञ्च सम्बोधिताः सर्वदा ।

जयः श्रीजनन्या जयः,- जयः श्रीजनन्या जयः,
जयः श्रीजनन्या जयः ।

मातृवन्दना ( सङ्गीतम् )

मातुचरणमस्तु शरणमस्तनिखिल-दैन्यम् ।
शोकशमन-मार्तिदमनमखिल-भुवनमान्यम् ॥ ४८

तिष्ठतु चिरममरनिकर चैक्षणपथदूरे ।
मज्जमोक्ष-दानदक्ष-मातृभक्तिपूरे ॥४९

अक्षम-सुत-रक्षणकृतयत्न-कलितकीर्तिः ।
राजतु मम हृद्यनुपम-मातृमधुरमूर्तिः ॥५०

इति पञ्चम दृश्यम् ।

——०——

## षष्ठ-दृश्यम्

[ निवेदितायाः दीक्षालाभः ]

स्थानम्—नीलाम्बर-मुखोपाध्यायोद्यानवाटिकास्थित-मठस्य देवतार्चन-प्रकोष्ठः ।

समयः—ब्राह्ममुहूर्तः । २५ मार्च, १८९८ खीष्टाब्दः ।

( ततः प्रविशन्ति स्वामी विवेकानन्दः, मार्गरिट्, म्याक्लयेड्, ओलिवुल् च )

## विवेकानन्दः (सङ्गीतम्)

### श्रीश्रीमुरारि-वन्दना

नौमि मुरारिं मनोहर-हरिं
मञ्जुल-मञ्जीर-धरम् ।
मञ्जरि-रमणं मन्दिर-भरणं
मङ्गल-मञ्जूषा-करम् ॥
मदन-भञ्जनं मनन-रञ्जनं
मृदुल-निकुञ्ज-निधानम् ।
मर्त्य-नन्दनं मर्म-चन्दनं
मोहन-मसृण-विधानम् ।
मदिर-दर्शनं मथित-हर्षणं
मधुरारविन्द-गन्धम् ।
मधु-मथुरेशं मृदित-द्वेषं
मर्दित-पदनत-बन्धम् ॥

विवेकानन्दः । विशेष-पवित्रो दिवसोऽयम् । यतोऽद्य "Day Of Annuciation", यस्मिन् दिवसे स्वयं भगवान् यीशुः मेरीमातुः सन्तानरूपेण जनिष्यत इतीयं शुभसंवादं देवदूतो मेरीमातरं सानन्दं विज्ञापितवान् ।

मार्गारेट् ! अस्मिन् परमपूते प्रत्यूषे त्वामहं ब्रह्मचर्यव्रते दीक्षितां करिष्यामि ।

अवकरमिव वह्निर्जन्मिनां पापराशिं
प्रभवति खलु दीक्षा भस्मसात् संविधातुम् ।
गमयति गुरुपापानप्यसौ देवभावं
परिचयलिपिरेषा ब्रह्मलोकप्रवेशे ॥ ५१

मार्गरिट् । देवदेव ! धन्यातिधन्याऽहं भवत्-कृपालाभेन ।

विवेकानन्दः । प्रारम्भे कुरु शिवपूजाम् ।

( मार्गरिट् तथा करोति )

विवेकानन्दः । सोम्ये ! अस्मिन् प्रज्वलिते पूते होमाग्नौ कुरु आहुतिदानं, तद्द्वारेण त्वत्सर्वस्व-समर्पणञ्च ।

मार्गरिट् । अद्यास्मिन् परमपवित्रे ब्राह्ममुहूर्ते अहं ददाम्याहुतिम् परमपवित्रे होमाग्नौ । तद्द्वारेण चाहं समर्पयामि मम सर्वस्वं श्रीभगवच्चरणे—मम देहं, मम प्राणान्, मम मनः, ममात्मानं, ममात्माभिमानं, मम सदम्भ-स्वातन्त्र्यं, मम प्रचण्ड-प्रभुत्वम्—मम सर्वं, मम सर्वस्वं, मम सर्वं स्वरूपम् ।

अस्य होमाग्नेः सर्वान्धकार-विनाशिनीभिः सर्वकलुषहारिणीभिः सर्वविपत्तारिणीभि-र्लोहित-लसित-लम्बित-शिखाभिरपसृतं भवतु मम चित्ततमिस्रम्, विनष्टानि भवन्तु मम जीवन-पापानि, तिरोहिता भवन्तु मम मानस-तापाः ।

ॐ अग्नये स्वाहा, ॐ अग्नये स्वाहा, ॐ अग्नये स्वाहा ।

### अग्नि-वन्दना

देवदहन दुरितदलन पापदमनदक्ष ।<br>
हव्यं वह गव्यमनघ ! याजकमयि ! रक्ष ॥५२

अध्वरशत-साधनरत-राजककृतसेवः ।<br>
त्वमसि सतत-मर्पितशत-वित्तविदित-देवः ॥५३

सप्तजिह्व भवसि प्रह्व-भक्तविभवदाता ।<br>
पिङ्गकेश-पिङ्गवेश सर्वकलुषपाता ॥५४

ज्योतिर्मयस्यानल एष मूर्ति-
स्तत्तेजसः पूर्णतमः प्रकाशः ।
अतस्त्वमेषोऽद्य वृणोमि भक्त्या
वन्दे पुनः प्राण-मनोऽक्ष-धीभिः ।।५५

( इत्याहुतिं ददाति )

विवेकानन्दः । अयि शुचिस्निग्धे ! मन्त्रं गृहाण । ( मन्त्रं कर्णे कथयति )

( मार्गरिट् मन्त्रमुग्धावत् तिष्ठति )

विवेकानन्दः । यस्मिन् परम-पवित्रे होमाग्नौ त्वं तव यथा-सर्वस्वम् आहुतिरूपेण दत्तवती । तस्मादिदं भस्माहृत्य अहं तव ललाटे पुण्य-तिलकम् अङ्कयामि । ( तथा करोति )

इदमेव परम-पवित्रं भस्म-तिलकं भवतु अद्यावधि तव प्रतीक-भूतम् ।

ददामि ते इमां रुद्राक्षमालाञ्च । एषापि भवतु तव नित्य-सङ्गिनी ।

मार्गरिट् । कृतकृतार्था अहम् ।

विवेकानन्दः । ददामि ते महावित्तं महानाम [एकम्—निवेदिता ।

मार्गरिट् । ( मन्त्रमुग्धावत् ) "नि—वे—दि—ता" ! "नि—वे—दि—ता", "नि—वे—दि—ता" ?

विवेकानन्दः । वाढ़म्—"निवेदिता" ! अद्यावधि त्वं निवेदिता परब्रह्मचरणे, महाजननीचरणे, विश्वजन-चरणे च ।

मार्गरिट्। जन्मनः प्रागेवाहं निवेदिता श्रीभगवच्चरणे मम स्नेह-कोमल-जनन्या। तदेव निवेदनम् अद्य समाप्तं जातं श्रीगुरु-देवस्य परम-कृपया।

विवेकानन्दः। निवेदिते! निवेदय तव समग्रजीवनं श्रीरामकृष्णपरमहंसदेवस्य महातत्त्वं जनसमाजे प्रचारयितुम्। निवेदय तव समग्र-जीवनं ब्रह्मणो मूर्तं प्रतिच्छविरूपं ब्रह्माण्डम् अर्चयितुम्। निवेदय तव समग्र-जीवनं तव स्वकीयं चिरप्रदीप्तम् आलोकम्, चिरोच्छलितम् आनन्दम्, चिरक्षरितम् अमृतं दिशि दिशि, देशे देशे जने जने काले काले प्रोद्भासयितुम् प्रकटयितुम् प्रवर्षितुञ्च।

निवेदिता। तदेव करिष्यामि श्रीगुरुदेव! तदेव करिष्यामि निश्चितम्।

विवेकानन्दः। सार्थकं भवतु नाम तव पुण्यं नाम। सार्थकं भवतु नाम तव धन्यं जीवनम्। सार्थकं भवतु नाम तव अनन्यं व्रतम्।

निवेदिता। सार्थक-नामा, सार्थक-जीवना, सार्थक-व्रताहं भवत्कृपालाभेन।

विवेकानन्दः। अयि! पुण्यव्रते! परिशेषे कुरु श्रीबुद्धस्य चरणे पुष्पाञ्जलि-प्रदानम्।

( बुद्धवन्दना )

शुद्धोदनसुत बुद्ध समुद्धत-दुःखदलित-जगदीश!
लुञ्चितकेश ॥४६
परिहृत-काञ्चन-नरपतिलाञ्छन विचरसि लुञ्चितकेश ॥४६

विहाय भवनं नन्दनदमनं भ्रमसि भुवनमतिगूढ़म् ।
कलयसि विपिनं करोषि वसनं कषायकमनं रूढ़म् ।।५७

भिक्षावृत्तिर्मुण्डितमूर्तिः करकृतभिक्षापात्रः ।
मनसिजजेता भुवनत्राता ध्यानोचित-ऋजुगात्रः ।।५८

निवेदिता । ( तथा कृत्वा ) बुद्धं शरणं गच्छामि, धर्म्मं शरणं गच्छामि ; सङ्घं शरणं गच्छामि ।

विवेकानन्दः । शृणु ! प्रारम्भे त्वया शिवपूजा कृता, परिशेषे बुद्ध-पूजा । द्वौ त्यागिश्रेष्ठौ महायोगिनौ । अयं त्याग एव भवतु तव जीवन-मन्त्रः । ( सावेगम् )

गच्छ गच्छ, अनुसर तं बुद्धं यो बुद्धत्व-लाभानन्तरमपि केवलं परसेवार्थं पञ्चशतवारं जन्म-मरणशीलां संसारलीलां वृतवान् स्वच्छन्दं सानन्दञ्च ।

निवेदिता । अहो ! इदं प्रभातं मम जीवनस्य सर्वश्रेष्ठानन्दमयम् ।

विवेकानन्दः । इदं प्रभातं भवतु तव नवजीवन-प्रभातम्—चिरोज्ज्वलं चिरनिर्मलं चिरानन्दमयम् ।

इति षष्ठ-दृश्यम्

—o—

# सप्तम-दृश्यम्

[ निवेदिताया जनसेवा-व्रते दीक्षा ]

स्थानम्—कलिकातान्तर्गत-वाग्वाजार-पल्ली ।

(१६, वोस्पाड़ा लेन)

समयः मध्याह्नः । मे-मासः—१८९८ ।

( ततः प्रविशन्ति स्वामि-विवेकानन्दः, निवेदिता अन्ये च )

विवेकानन्द; । अहो दौर्भाग्यम् ! भृशं प्लेग-रोगग्रस्ता इयं कलिकाता नगरी साम्प्रतम् । सर्वत्र वर्तते महातङ्कः । अहो, किं करणीयम् ?

शिवानन्दः । भ्रातः ! मा उद्विग्नो भव । तव साहसं तव स्थैर्यं तव आशावादः सर्वथा सर्वदा च अस्मान् उद्बोधयन्ति । ततो यदि त्वमपि विचलितो भवसि तर्हि वयं किं कुर्मः ?

विवेकानन्दः । (आत्मानं प्रशमय्य) शृण्वन्तु सर्वे अवहिताः । नगर्यां सेबकानां भृशम् अभावः । ततः सर्वप्रथमम् एव तद्विषयिणी व्यवस्था करणीया ।

सदानन्दः । कलिकाता-नगर्यां प्रत्यहं शताधिका जनाः प्लेग-रोगेणाक्रान्ता म्रियन्ते । ततः को वा कस्य सेवां करिष्यति ?

आत्मानन्दः । भ्रातः ! प्लेगरोगस्य प्रथमं कारणम् आविलता । कलिकाता-नगर्याः शोचनीयतमा अवस्था जाता अस्मिन् विषये । यतः सर्वं एव पथि-परिष्कारकाः पलायिताः सुदूरदेशे । तत्र किं वा करणीयम् ?

नित्यानन्दः। अद्भुता इयं साम्प्रतिकी अवस्था ! राजाधिराज-यमस्य प्रथम-पदक्षेपेणैव महामहिमान्वित इंराज-सरकार-वाहादुरोऽपि भयव्याकुलः पराजित इव परिलक्ष्यते। मन्ये, स यमराजस्य हस्ते शासनभारं दत्त्वा पलायितः स्वराज्यात्।

निवेदिता। किन्तु आर्य ! केवलः सरकार-वाहादुरः किं करिष्यति अस्मिन् विषये ? आकस्मिक-सुमहाविपत्काले साधारणा जना एव प्रतिकर्तारः, नान्ये नान्ये।

विवेकानन्दः। वाढ़म्। एतदर्थमहम् असुस्थोऽपि दार्जिलिंनगरीं परित्यज्य अत्रागतस्ताड़द्गत्या।

सदानन्दः। ( सोद्वेगम् ) ततः प्राथम्येन तव स्वीय-चिकित्सैव करणीया। त्वं हि अस्माकं सकल-कर्मणां केन्द्रम्, सकल-प्रचेष्टानां मूलम्, सकलोत्साहानाम् उत्सः। त्वां विना मणिहीनाः फणय इव वयम् अन्धा भविष्यामः—तदपि चिन्तय, प्रिय भ्रातः ! अस्माकं दशामपि चिन्तय ; न चिन्तय केवलं परेषां दशाम्।

विवेकानन्दः। ( विहस्य ) परमादरणीय-भ्रातृवर ! असीमं खलु तव प्रेम ! किन्तु प्राणप्रतिम ! त्वं सन्नचासी, "अस्माकं दशा" "परेषां दशा" इति भेदो न त्वयि युज्यते। सन्न्यासि-जनानां समीपे "वसुधैव कुटुम्बकम्"।

अन्यतस्तु, पृथिव्याः कोऽपि नैतादृशोऽपरिहार्यः यस्याभावे पृथिवी न चलिष्यति। ममाप्यभावे यूयं चलिष्यथ एव, नव-



विवेकानन्देन सह सानन्दं चलिष्यथ सुनिश्चितमेव। ( सर्वे हसन्ति )

शिवानन्दः। नहि नहि। जगति विवेकानन्द एक एव, न द्वितीयः। एक एव सूर्यः, एक एव हिमाचलः, एक एव सिन्धुः। समभावेन एक एव विवेकानन्दः—अद्वितीयः अनुपमश्च।

विवेकानन्दः। भवतु तत्, भ्रातः, भवतु तत्। कोऽपि न जगति स्वप्रशंसा-श्रवणविमुखः। अतस्तव वचांसि मम कर्णकुहरयो--र्मधु वर्षंति सुनिश्चितम्। ( सर्वे हसन्ति )

किन्तु भ्रातः! सत्यं कथयामि यत्, मा उद्विग्नो भवतु नाम भवान् मदर्थम्। वस्तुतो मच्चिन्तया समय-क्षेपो न वाञ्छनीयः। असुस्थोऽहं सत्यम्। किन्तु ततोऽप्यधिकं सत्यम् इदमेव यन्मत्तः सहस्र-गुणेनासुस्था जना अवहेलिता असेविताश्च वर्तन्ते साम्प्रतम्। तेषां मङ्गलं चिन्तय भ्रातः! अन्यत् सर्वमपि अपेक्षितुं शक्नोति, किन्तु भीषण-मारणरोगग्रस्तानाम् उद्धारो न पारयति अपेक्षितुं मुहूर्तमात्रम्—न, न, न।

निवेदिता। भवानेव कथयतु, किम् अस्माकं करणीयम् अत्र। वयं सर्वे सज्जीभूता भवदादेशम् अपेक्षामहे रुद्धश्वासम्।

विवेकानन्दः। आदेशस्य का कथा अत्र? इदं सर्वेषामेव कर्तव्यभूतम्। भवतु, शृण्वन्तु सर्वे।

प्लेगरोग-ग्रस्तानां सेवार्थम् अस्माभिरत्र एका समितिः स्थापनीया। निवेदिता सभानेत्री कर्मसचिवश्च भवतु। अस्याः समितेः प्रधान-परिचालको भवतु शिवानन्दः। नित्यानन्द आत्मानन्दश्च भवतो तस्याः सङ्ग्रह-सहकारिणौ।

निवेदिता । त्वत्प्रदत्तं महाभारमहं सानन्दं गृह्णामि नत-मस्तका । न जाने सफल-कामा भविष्यामि न वा ।

विवेकानन्दः । ( सावेगम् ) साफल्यं त्वया अवश्यमेव लप्स्यते । किं न जानासि कल्याणि ! यत् तव श्रीहस्ते अद्य मम प्राणानहं दत्तवान् । यतः आर्त-पीड़ित-दुर्दशाग्रस्ता जना एव मम प्राण-स्वरूपाः । मा विस्मर शिष्यप्रवरे ! मा विस्मर तन्मुहूर्तमपि ।

निवेदिता । यद् भवान् आदिशति ।

शिवानन्दः । किन्तु भ्रातः ! सेवाकार्यार्थं, विशेषेण भीषण-पीड़ितानाम् उद्धारार्थं प्रभूतार्थाः प्रयोजनीयाः । वयं दीन-दरिद्राः सहायसम्बलहीनाः सन्न्यासिनः । ततः कुतो लप्स्यामहे वयं प्रयोजनीयान् अर्थान् ।

विवेकानन्द; । ( अधीर ) यातु तत्, भ्रातः ! यातु यातु तत् । प्रयोजनीयानि अटलं साहसम्, स्थिरो विश्वासः, निष्कामं प्रेम, निरन्तर उद्यमश्च । एतेषु विद्यमानेषु सिद्धिरवश्यम्भाविनी । तत्रार्थगमो भवतु न वा ।

तथापि उद्घोषयामि, प्रयोजनीया अर्था मयाऽवश्यमेव संग्राह्याः । येन तेन प्रकारेण अर्था आगमिष्यन्ति सुनिश्चितमेव । कस्तस्य बाधको भवितुमर्हति ?

पश्य, रमणीय-रविरश्मयो लसन्ति दिशि दिशि कुसुम-कोरकान् विकाशयितुम्, कियत्कालं मेघावरणं तान् निवारयितुं समर्थम् । पश्य, प्रसन्न-प्रवर-पवनः प्रवहति दिशि दिशि प्रसून-सुरभि विस्तारयितुम्, कियत्कालं पर्वत-प्राचीराणि तं निवारयितुं

समर्थानि । पश्य, निर्मल-निर्जर-निर्झरा उत्सरन्ति दिशि दिशि शुष्क-कठिन-मृत्तिकां सरसीकर्तुम्, कियत्कालं प्रस्तर-स्तूवपास्तान् निवारयितुं समर्थाः। न तु शाश्वत कालं—न न न। अत एव निश्चितं जाने यत्, आशावादो अहं मम शुभ-सङ्कल्पो न व्यर्थो भविष्यति, कियत्कालं मानस-भीरुता तं व्यर्थीकर्तुं समर्था !

वयं सर्वे भारतीयाः सत्यं विश्वसिमश्चिरम्।
गीतायास्तां महावाणीं भगवन्मुखनिःसृताम् ॥५९

"न हि कल्याणकृत् कश्चिद् दुर्गतिं तात ! गच्छति"
जयः सुनिश्चितस्तेषां कल्याणाभिनिवेशिनाम्।
कल्याणकारिणी शक्तिः पराजयपराम्मुखी ॥६०

सा चात्मनः प्रदानेन तथाच प्रम-सेवयोः।
आसाद्यते, भवत्वेषा भवतामद्य जीवने ॥६१

निवेदिता । अहो ! अग्निवर्षिणी इयं वाणी अस्माकं प्राणेषु प्रज्वलयति प्रचण्डोत्साह-दहनम् ।

विवेकानन्दः । ( भावाविष्टः ) पुनरपि उद्घोषयामि—प्रयोजनं चेत्, अहं स्वच्छन्दं सानन्दं विक्रेष्ये मम मठस्य भूसम्पत्ति सर्वाम् ।

शिवानन्दः । ( चकितः ) किं, किं भणसि भ्रातः ? कथं त्वं तव प्राणप्रिय-मठस्य, तव जीवन-व्रत-मठस्य, तव सकल-स्वप्न-मठस्य भूभागं सर्वं विक्रेष्यसे जन-सेवार्थम् ? ततः किं वा भविष्यति अस्माकं निःसम्बलानां सन्न्यासि-जनानाम् ?

विवेकानन्दः । भ्रातः ! वयं सन्न्यासि-जनाः, भिक्षान्नं भुक्त्वा, वृक्षच्छायायां शयित्वा जीवनम् अतिवाहयितुं समर्था अनायासेन ।

ततो यदि वयं मठभूभागस्य विक्रय-लब्धार्थेन सहस्र-सहस्र-जीवनानि रक्षितुं समर्था भवेम, ततोऽधिकं किं वा साफल्यं मठस्य तदीय-सम्पत्तेर्वा ?

भ्रातरः, प्राणप्रिय-भ्रातरः ! पुनरपि कथयामि, क्लेश-क्लेदक्लिष्टान् माया-मोह-मथितान् पाप-ताप-पङ्किलान् जनान् परित्यज्य न कामये अहं मम मोक्षम् । ते अहञ्च एकसूत्र-ग्रथिता । तेषां सुख-दुःखे ममापि सुख-दुःखे, तेषां पाप-पुण्ये ममापि पाप-पुण्ये, तेषां बन्ध-मोक्षौ ममापि बन्ध-मोक्ष । ते मम मन-प्राण-जीवन-स्वरूपाः, ते मम सर्वस्वानि, ते मम सर्वे । अहं जनसेवकः न जनद्वेषकः—कदापि न ।

न्यासी न संसारमिमं कदाचित्
सपत्नसम्भावनया जहाति ।
करोति किन्त्वस्य हि बन्धुबुद्ध्या
क्षेमञ्च शान्तिञ्च महोन्नतिञ्च ॥६२

संसार एषोऽस्ति न तुच्छवस्तु
मोक्षस्य सोपानमसौ प्रशस्तम् ।
निष्पाद्य निष्काममिहैव कर्म
निष्कण्टकं मोक्षपथं हि कुर्मः ॥६७

निवेदिता । श्रीगुरुदेव ! इदमेव अस्माकमपि जीवनलक्ष्यं शाश्वतकालम् ।

( ततः प्रविशति वेगेन स्वास्थ्यरक्षाधिकृतः—हेल्थ् अफिसार् )

अफिसार् । श्रुतं मया अत्रैव स्थापिता भविष्यति स्वामि-विवेकानन्दस्य प्लेग्-निवारणी समितिः । कुत्र एषा ? अहं हेल्थ्

अफिसार् सरकार-बाहादुरेणात्र प्रेरित एतद् विषयक-संवाद-संग्रहणाय। किन्तु कुत्र तत्समितेरभीप्सितः कार्यालयः? न पश्याम्यत्र किञ्चिदपि तस्याश्चिह्नम्।

निवेदिता। (विहस्य) सा समितिः अत्रैव विराजिष्यते।

अफिसार्। अत्रैव? अस्मिन् क्षुद्रे बद्धे कलुषिते प्रकोष्ठे?

निवेदिता। तेन किम्? यथार्थ-सेवा हि सर्वायोजननिरपेक्षा सर्वाडम्बर-विहीना सर्व-ढक्कानिनादशून्या च। न सन्त्यस्माकं बहुमूल्य-गृहसज्जा-द्रव्याणि, किन्तु सन्ति परम-सौभाग्येन बहुमूल्य-मानस-सज्जा-द्रव्याणि—प्रीति-भक्ति-श्रद्धा-सेवा-समाख्यानि। किं वाधिकं प्रयोजनीयम् अस्माकम्।

अफिसार्। न जाने, न जाने तत्। (मस्तक-कण्डूयनपः) भद्र-महोदये! नाहं पारयामि भवद्वचनार्थं बोद्धुम्। भवतु, कथयतु कृपया मां भवत्कार्यसूचीम्।

निवेदिता। बहवोऽस्माकं कार्यसूचयः—आर्तसेवा, रोग-प्रतिषेधः, अभयदानम्, मार्ग-परिष्करणम् इत्यादयः।

अफिसार्। किन्तु कथं भवन्तो मुष्टिमेयाः सहाय-सम्बलहीनाः सन्न्यासिजना एतानि गुरुभाराणि कर्माणि कर्तुं पारयिष्यन्ति?

विवेकानन्दः। न वयं सहाय-सम्बलहीनाः। यतः श्रीभगवान् स्वयमस्माकं सहायः। अपरे सहायास्तु पल्लीवासिनः सर्वे।

अफिसार्। किन्तु कथं भवन्तो मार्गान् परिष्करिष्यन्ति? अतीवापरिष्कृतं दुर्गन्धमयं मलपरि-क्लिष्टम् इदमञ्चलम्

पूर्णञ्च । सर्वे मार्गपरिष्कारकाः पलायिता रोगभयात् । किमहं करोमि ?

निवेदिता । महाशय ! मा उद्विग्नो भवतु । अहम् अस्य वाग्वाजाराञ्चलस्य भारं सम्पूर्णतया गृह्णामि । सरकार-वाहादुराय एतदेव निवेदयतु ।

इति सप्तम-दृश्यम्

——०——

## अष्टम-दृश्यम्

[ निवेदिताया जनसेवा ]

स्थानम्—कलिकातान्तर्गत-वाग्वाजार-पल्लीपथः ।
समयः प्रभातम् । मे-मासः—१८९८ ।

( ततः प्रविशति चिन्ताक्लिष्टा निवेदिता )

निवेदिता । अहो ! प्लेग-रोग-प्रशमनाय विविध-व्यवस्था अस्माभिर्यथाशक्ति कृता । यथा, अज्ञ-कुसंस्कारग्रस्त-साधारण-जनानां मध्ये प्लेगरोग-प्रतिषेधक-"टीका" ग्रहण-व्यवस्था, प्लेग-रोगग्रस्तानां चिकित्सा-व्यवस्था, शवदाहादि-व्यवस्था, अनाथानाम् आश्रय-व्यवस्था सर्व-मनोवल-रक्षण-व्यवस्था च ।

तथापि, हा हन्त ! गुरुतरे अवश्य-प्रयोजनीये मार्गपरिष्करण-विषये न किमपि कर्तुं समर्था वयम् अद्यावधि । अथच, भीषण-

संक्रामक-प्लेग-रोगस्य विस्तार-निवारणार्थम् इयं व्यवस्था हि अत्यावश्यकी। किन्तु किं करोमि, कुत्र वा प्राप्स्यामि मार्ग-परिष्कारकान् ?

सर्वे वेतन-भोगि-मार्गपरिष्कारकाः कलिकाता-नगरीं परित्यज्य पलायिता बहुपूर्वमेव। ततः स्तूपीकृतानि पर्वतप्रमाणानि पूतिगन्धि-मलानि समग्र-वाग्वाजाराञ्चलं दूषयन्ति निरन्तरम्।

अत एव एतद्विषये सुष्ठु व्यवस्था अविलम्बम् अवलम्बनीया।

अहो ! किं करोमि ? ( दूरं गच्छति )

( ततः प्रविशन्ति कथोपकथनरतास्त्रय उद्वेगव्याकुला युवकाः )

प्रथमः। बान्धवौ ! न विलम्बः करणीयः, अविलम्बम् इयं भीषण-पापपुरी परित्याज्या। ततोऽहं गमिष्यामि मम श्वशुरालयं काणपुर-नगरम्।

द्वितीयः। सत्यं, सत्यम्। न वयं साधारण-दलान्तर्गताः, वयं वित्तशालिनः कुलीन-कुल-सम्भूताश्च। ततः कथं वयं साधारण-दीन-दरिद्र जनवत् अत्रैव मललिप्ते विकटे स्थाने मरिष्यामः? अत एवाहमपि गमिष्यामि दार्जिलि-नगरीस्थितं मम मातुलालयम्।

प्रथमः। हाः हाः हाः ! पच्यन्ताम् अत्र धूलि-धोरणीलिप्ता दीनहीना वाग्वाजार-पल्ली-निवासिनः। वयं निर्मल-गगनविहारि-विहङ्गमवत् "फुड़ुत्"कारेण उड्डयिष्यामः दूर-दूरान्तरस्थ-रमणीय-नगरेषु। के अस्मान् निवारयितुं समर्थाः ? हाः हाः हाः !

"फुड़ुत्"कारेण वयं पलायिष्यामहे सर्वान् कदलीं प्रदर्श्य सर्वेषां नासाग्रे सगर्वम्। हाः हाः हाः !

तृतीयः । हाः हाः हाः ! भ्रातः ! परम-रसिकस्त्वम् । ( प्रथममनुकृत्य ) "फुड़ू तकारेण, सर्वान् कदलीं प्रदर्श्य, सर्वेषां नासाग्रे सगर्वम् ।" हाः हाः हाः ! रस-सागरस्त्वं भ्रातः ! रसिक-चुड़ामणिश्चं ।

अहमपि युवयोः पन्थानम् अनुसरिष्यामि । अहं गमिष्यामि श्रीवृन्दावन-धाम्नि मम ज्ञाति-भ्रातृ-गृहे । मन्ये, तत्र पूर्वजन्मकृत-पापान्यपि दूरीभविष्यन्ति । हाः हाः हाः !

"रथदर्शनं कदली-विक्रयश्च" इति हि वङ्गीय-प्रवादः । तदेव घटिष्यते अत्र—प्लेग-रोगान्निस्तारः पाप-निचयादुद्धारश्च । हाः हाः हाः । ( सर्वे हसन्ति )

निवेदिता । ( तेषां समीपमागत्य ) अहो ! अत्रागताः सौभाग्याद् वाग्वाजाराञ्चलस्य केचिज्जनाः । अतस्ते एव मम सहाया भविष्यन्ति सुनिश्चितम् ।

( प्रकाशम् ) भद्रमहोदयाः ! भद्रमहोदयाः ! आगच्छत आगच्छत अत्र कृपया । भीषण-विपद्ग्रस्ताहं भवतां साहाय्य-प्रार्थिनी ।

प्रथमः । को न्वस्माकं मधुर-विस्रम्भालापे विघ्नं सृजति ? अस्मान् अकारणं व्याघ्रान् करोति च ? ( दृष्ट्वा ) अहो ! सा विदेशागता तथाकथित-भारत-प्रेमिका भगिनी निवेदिता ! फुः फुः फुः ! जनसेवा-व्रते उद्बुद्धान् कर्तुं सा लगुड़-हस्ता सर्वान् ताड़यति यमदूतीव । "जनसेवाव्रतम्" ! फुः फुः ! कथं वयम् अन्यान् जनान् सेविष्यामहे ? के ते अस्माकम् ? किं श्यालकाः, श्वशुरा-

लय-भृत्या वा ? ततः कथं वयं तान् सेविष्यामहे ? आश्चर्यं महदाश्चर्यम् ।

तृतीयः । हाः हाः हाः ! सत्यम् अतीव-सुरसिकस्त्वं भ्रातः ! सुष्ठु त्वया भणितम् । कथं वयम् अस्माकं कुसुम-कोमलानि जीवनानि परसेवार्थं जीर्ण-शीर्ण-शुष्काणि करिष्यामः ?

द्वितीयः । सत्यं पूर्णसत्यम् । किन्तु भ्रातरौ ! वाक्यव्ययं विहाय पलायनपथम् अनुसरतम् । अतीव कठोर-सङ्कल्पा कठिन-हृदया चेयं विदेशि-महिला । वयं तस्याः करतलगताश्चेत् सा अवश्यमेवास्मान् गलदेशे धृत्वा जनसेवा-व्रते नियोक्ष्यते ।

( सर्वे पलायनोन्मुखाः )

निवेदिता । ( पुरः आगत्य तेषां मार्गम् अवरुध्य सक्रोधम् ) भद्रमहोदयाः ! किं भवन्तो वधिरा मूढा वा ? अन्यथा, कथं भवन्तो मम उच्चाह्वानमपि न श्रोतुं समर्थाः ?

प्रथमः । ( भीत-कम्पितः ) अहम्...अहम्...मान्य-महाशये ! मम कर्णपटहौ दाहयुक्तौ जातौ साम्प्रतम्, ततो नाहं त्वरित-श्रवण-समर्थः । अतएव भवदाह्वानं श्रोतुं नाहम् अपारयम् ।

द्वितीयः । ( भीत-कम्पितः ) भद्रमहोदये ! मम जिह्वा स्फोटकतप्ता जाता साम्प्रतम्, ततो नाहं त्वरित कथन-समर्थः । अत एव भवदाह्वानं श्रुत्वापि नाहम् उत्तरं दातुम् अपारयम् ।

तृतीयः । ( भीत-कम्पितः ) माननीय-महिले ! मम पादौ

प्रस्तरपिष्टौ जातौ साम्प्रतम्, ततो भवदाह्वानं श्रुत्वापि नाहं भवत्-समीपे गन्तुम् अपारयम् ।

निवेदिता । ( अधैर्या ) विरमन्तु, विरमन्तु भवन्तः कृपया । वृथा दोषक्षालन-प्रचेष्टां परित्यजन्तु । अस्ति भवतां गुरुतरं कर्तव्यमेकम् ।

प्रथमो द्वितीयस्तृतीयश्च । ( सभयम् ) किं तत् ?

निवेदिता । ( अधैर्या ) भद्रमहोदयाः स्वचक्षुःकर्णयोर्यथोपयुक्तं व्यवहारं कुर्वन्तु कृपया । किं न पश्यन्ति भवन्तो यत् वाग्-बाजाराञ्चलस्य मार्गाः पूतिगन्धि-मललिप्ताः साम्प्रतम् ?

प्रथमः । तेनास्माकं किम् ? न वयं मार्गाश्रयिणो भिक्षुकाः । अस्माकं सन्ति राजप्रासादाः । तदभ्यन्तरे मललेशोऽपि नास्ति ।

द्वितीयस्तृतीयश्च । सत्यं सत्यम् ।

निवेदिता । ( सक्रोधम् ) रे रे मूढाः ! न जानन्ति भवन्तो यत् कलिकाता-नगरी साम्प्रतं भीषण-प्लेग-रोगग्रस्ता—तत ईदृश-भीषण-प्लेग-रोग-प्रतिषेधाय पन्थानोऽपि परिष्करणीया झटिति ?

प्रथमः । सत्यं सत्यम्, मान्य-महाशये, सत्यम् । अस्योपायन्तु अहं भवत्यै निर्देक्ष्यामि । ( मस्तक-कन्डूयणपरः ) अहो ! अहो ! उपायः प्राप्तो मया, उपायः प्राप्तः—महोपायः । आह्वयतु भवती कृपया मार्ग-परिष्कारकान् एतदर्थम्, आह्वयतु कृपया । अहं यामि ।

( प्रस्थानोद्यतः )

द्वितीयस्तृतीयश्च । अतीव [illegible]

भ्रातृवरः । तदेव करोतु भवती, तदेव करोतु । आवामपि गच्छावः ।

(प्रस्थानोद्यतौ)

निवेदिता । (सक्रोधम्) तिष्ठन्तु भवन्तोऽत्र कृपया कियत्-कालम् । किं भवन्तो बुद्धिविहीना जड़ाः ? न जानन्ति किल यत् नगरस्य मार्गपरिष्कारकाः सर्वे प्लेग-रोग-भयान्नगरात् पलायिताः ?

"उद्धरेदात्मनात्मानम्" इति भारतदर्शनसार-गीताया वाणी । तत आगच्छन्तु भवन्तः, इमं मार्गं मलवर्जितं कुर्वन्तु कृपया । अहमानेष्यामि भवदर्थं सम्मार्जनी-जल-वीजाणुनाशक-चूर्णप्रमुखाणि सर्वाण्यावश्यकानि द्रव्याणि । भवन्तस्तरुण-वयस्काः स्वास्थ्यवन्तः क्षिप्र-कर्माणश्च । तत एतन्मार्ग-परिष्करणं भवत्-पक्षे अतीव लघु कर्म । ततो विलम्वो न करणीयः । आगच्छन्तु भद्रमहोदयाः, प्रारभन्तां कर्म ।

प्रथमः । (सरोषम्) किं, किं कथयति भवती ? अहम् अभिजातवंशीयः, वङ्गीय-सरकार-वाहादुरस्य महासम्मान-भाजन-प्रधान-कर्णिकः "वड़वावु" । कथमहम् अन्त्यजोऽस्पृश्यो घृण्यश्चण्डाल इव मार्गपरिष्कारको भवामि ? महाशये ! भृशम् अपमानितोऽहं जातो भवत्या अत्यद्भुत-प्रस्तावेन ।

द्वितीयः । (सरोषम्) अहमपि । अहमपि अभिजात-वंशीयः, श्रेष्ठ-व्यवसायि-श्रील-श्रीयुक्त-भुजङ्गचन्द्र-महोदयस्य विश्वस्तकर्म-चारी—"पारसोनाल् एटेन्डेन्ट" ।

तृतीयः। अहमपि। अहमपि अभिजात-वंशीयः; लक्षपति-श्रील-श्रीयुक्त-धनुर्धरप्रसाद-महोदयस्य गृहपरिचालकः—"बाजार सरकारः"।

निवेदिता। (क्रोधं संहृत्य) तेन किम्? अभिजात-वंशीया भवन्तो देशस्य सङ्कटकाले देशवासिनां सेवाशुश्रूषा-व्रतावलम्बनं करिष्यन्ति विशेष-रूपेण इत्येव सर्वेषां महत्याशा। भवादृशाः समाज-शिरोमणयो विशेष-भावेन सर्वेषां सम्मुखे आदर्श-रूपेण दण्डायमाना भविष्यन्ति, एतदेव सुष्ठु शोभनञ्च।

प्रथमः। न, न, न, कदापि न। एतदेव अत्यशोभनम्, अत्यन्याय्यम् अत्ययुक्तञ्च।

बान्धवौ! वृथा समयक्षेपो न वाञ्छनीयः। एषा विदेशिनो भारत-संस्कृति-महिमानं बोद्धुं स्वभावत एवासमर्था। अन्यथा कथं सा—उच्चनीच-धनिदरिद्र-पण्डितमूर्ख-ब्राह्मण-शूद्र-"बाबु-छोट"-लोकानां शाश्वत-भेदं न पश्यति? वयं गच्छामः (सर्वे प्रस्थिताः)।

निवेदिता। (दीर्घं निःश्वस्य) अहो मूढता! न जाने कदा मम प्राणाधिकाद् भारतवर्षात् अज्ञानान्धकारं विदूरीभूतं भविष्यति, विलीनो भविष्यति च कुसंस्कार-बाष्पः।

भवतु, न नैराश्यम् आश्रयणीयम् अत्र! समाज-सेवक-सेवका हि प्रतिपदं बाधा प्राप्स्यन्ति, प्रतिक्षेत्रं निन्दाभाजनानि भविष्यन्ति, प्रतिदिनं दुःख-क्लेशान् वरिष्यन्ति चेति किं वा आश्चर्यजनकम्?

कामं स मङ्गलमयो जगदीश्वरो नः
पुष्पास्तृतः शुभपथो न तथापि विश्वे ।
तस्यास्ति कारणमिदं—कुशलैषिणो हि
नित्यं भवन्त्यननुकूलदशाविहस्ताः ॥ ६४
एतेन ते दधति किन्तु महत्त्वमुच्चैः-
सर्वां विजित्य विपदं शुभमाहरन्तुः ।
आयासमुक्तमनरालपथेन साध्या
सिद्धिर्न वीर्यविभवस्य विभाति साक्ष्ये ॥६५

भवतु, बहुसमयो वृथा व्ययितः । मास्तु मम कोऽपि सहायः, अहम् एकाकिन्येव इमं मार्गं परिष्करिष्यामि स्वहस्ताभ्याम् । भारतभूमिर्मम प्रियतमा देशमाता । तस्याः प्रत्येकं धूलिकणापि परम-पवित्रा-मत्समोपे । ततो यदि मार्ग-मार्जनकाले अहम् ईदृशः धूलिधोरणीलिप्ता भवामि, तेन का क्षतिः ? परन्तु अहं पवित्री-भविष्यामि देशमातृकायाः परम-पूत-रजोराशिभिः ।

( सम्मार्जनीं जलं जलपात्रं खनित्रञ्चानीय मार्गमार्जनरता )

( ततः प्रविशति यदुनाथ-सरकारः—परवर्ति-काले सुप्रसिद्ध ऐतिहासिकः )

यदुनाथः । (मणिबन्धस्थितं "रिष्ट्ओयाचं" प्रति दृष्टिं दत्त्वा) अहो ! मम साक्षात्कारस्य निर्दिष्ट-समयात् अर्धप्रहराधिकः समयो गतः । भारतवासिभिः समयानुवर्तिता अवश्यमेव शिक्षणीया । भृशं लज्जितोऽहम् । भवतु, यामि यथाशीघ्रम् । ( सहसा सम्मुखे परिलोक्य ) अहो ! किं न्वेतत् ? प्रदीप्त-होमाग्नि-शिखासमा सम्मार्जनी-खनित्र-जलाधारहस्ता एका विदेशिनी नारी वाग्-

बाजाराञ्चलस्य दुर्गन्धमय-मल-लिप्तं मार्गम् एकाकिनी स्वहस्ताभ्यां परिष्करोति ! अत्याश्चर्यं दृश्यमिदम् । का इयम् ? अहो अत्याश्चर्य-रूपधारिणी सा, शुभ्रवसन-परिहिता भस्मतिलक-विभूषिता, रुद्राक्षमालाशोभिता महायोगिनीव परिलक्ष्यते, शाप-भ्रष्टा देवीव वा ।

अहो ! अस्य बाग्वाजाराञ्चलस्य शङ्कातङ्किते, पङ्कपूरिते, कलङ्ककलिते मार्गे अद्य सहसा प्रस्फुटिता प्रसन्ना पङ्कजिनी प्रभूत-प्रभया । अहो ! स्वर्गीयमिदं दृश्यं सर्वोपमाविहीनञ्च ।

(उपसृत्य) भद्रे ! यदुनाथ-सरकारोऽहं नमस्करोमि भवतीम् । यदि भवती मम दोषान् न गणयेत्, ततः पृच्छामि—कथं भवती प्लेग-रोग-संक्रान्ते अस्मिन् बद्ध-विषम-विषाक्त-स्थाने प्लेग-रोग-बीजाणु-परिपूर्णाभिर्धूलि-धोरणीभिः आत्मानं परिप्लुतं करोति असोम-साहसेन ? अपि नेदम् अतीव विपज्जनकम् ?

निवेदिता । भद्रमहोदय ! नमस्कारः । असोमा खलु भवतः कृपा । किन्तु मान्य-महाशय ! समाज-सेवकाहं विश्वजन-चरणे नित्य-निवेदिता । ततो मयि न शोभते कदाचिन्मरण-भयम् ।

यदुनाथः । "विश्वजन-चरणे नित्य-निवेदिता ?" कल्याण-कमने ! यदि मार्जनीयं मम कौतूहलं तदा पृच्छामि—अपि भवती विश्वजन-वरणीय-स्वामि-विवेकानन्दस्य मानस-कन्या मन्त्रशिष्या च भगिनी निवेदिता ?

निवेदिता । (विहस्य) अपि अयमेव मम परिचयो जनसमाजे ? सुष्ठुरेषः । आत्मानम् असीम-सम्मानितं मन्ये एतेन । किन्तु. अहं

जाने यत् अयम् अत्युक्तिमात्रम् । यतो नाहं तस्य मानस-कन्या मन्त्र-शिष्या वा भवितुं योग्या । अहं मम पूज्यपाद-गुरुदेवस्य पाद-रजःकणिकामात्रम्, नाधिका काचित्, नाधिका ।

यदुनाथः । इदं भवत्या विनयमात्रम् । सर्व एव जानन्ति यत् भवत्येव भारत-प्राणप्रतिम-स्वामि-विवेकानन्दस्य महनीय-साधनाया मूर्त-प्रतिच्छविः, तस्य योग्यतमा उत्तरसाधिका च । असीमं सौभाग्यं मम भवद्दर्शनेन । विश्वजनचरणे नित्यनिवेदिते भगिनि निवेदिते ! गृहाण कृपया मम भक्ति-कुसुमाञ्जलिम् ।

निवेदिता । अपरिसीमः खलु भवतः स्नेहः ।

यदुनाथः । किन्तु भगिनि ! इदमस्माकमशलज्जा-कारणम् यद् भवती सुदूरात् इंलण्डदेशादागतापि स्वीय-जीवनं विपन्नं कृत्वापि अस्माकम् उपकार-साधनाय यत्नवती, अथच अस्याञ्चलस्य अधिवासिनो नीरवा निष्क्रिया दर्शका इव विराजन्ते ।

निवेदिता । ( सस्मितम् ) तेन किम् ? यद्यपि नाहं जन्मतो भारतवासिनो, तथापि भारत-वर्षं हि मम स्वदेशः, भारत-मेवाहि मम शाश्वत साधना, भारत-प्रेम हि मम प्राणसारः, भारत-मोक्षो हि मम जीवन-स्वप्नः ।

भारतवन्दना—

नमामि भारतजननीम् ।

धर्मसमन्वय-लब्ध-यशश्चय-सन्तत-सुरभितधरणीम् ॥६६

जलनिधिजटिलां हिमगिरिनिटिलां भगवत्प्रियतमगृहिणीम् ॥६७

कृतकल-तटिनीं फलनिविड़वनीं ऋतुचय-परिचयसुखिनीम् ॥६८

निदाघदग्धां वर्षास्निग्धां-शारद-शशिकर-भासिनीम् ॥६९
शैशिर-सञ्चय-रञ्जित-दलचय-पुञ्जित-शस्यकाशिनीम् ॥७०

( पुनः प्रविशन्ति पूर्वोक्तस्त्रयो युवकाः )

सर्वे: । मातः प्रणमामः । भृशं लज्जिता वयन् अस्माकं पूर्व-रुक्ष-व्यवहारात् । क्षमताम् अस्मान् कृपया ।

प्रथमः । मातः ! वाग्वाजाराञ्चलस्य सर्वे युवका भवदुदाहरणेन लज्जिता उद्बुद्धाश्च भूत्वा आगमिष्यन्ति मार्ग-मार्जनार्थम् । ततः कृपया विरमतु मातः, विरमतु भवती ।

द्वितीयः । मातः ! भृशं श्रान्तेव भवती परिलक्ष्यते । ततः कृपया विरमतु मातः, विरमतु भवती ।

तृतीयः । मातः ! धूलिधूसरितं भवत्या वदन-मण्डलम्, क्लेद-लिप्तं हस्तयुगलम्, स्वेदसिक्तं ललाटम्, जलसिक्तं वसनाञ्चलम् । ततः कृपया विरमतु मातः, विरमतु भवती ।

यदुनाथः । अहो ! धूलि-धूसरिता क्लेद-कलिता, स्वेदसिक्ता, जललिप्ता सा राजते मूर्तिमती सेवेव प्रीतिरिव करुणेव ।

मातर्निवेदिते ! परम-जनन्यास्तथा तस्याः प्रियतम-सन्तान-स्वामि-विवेकानन्दस्य, तस्यापि प्राणप्रतिम-विश्वसमाजस्य श्रीचरणारविन्दे नित्य-निवेदिता भवती सार्थक-नाम्नी सर्वथा ।

निवेदनं नाम निजं यदास्ते
महच्च पुण्यञ्च मनोरमञ्च ।
धन्यं यशस्यं बहुमानभाक् च
त्यागो हि तेषां जगतो हिताय ॥ ७१

एवं हि शैत्यं प्रददाति वायु-
रालोकमर्कः कुसुमं सुगन्धम् ।
अहो सुयोग्यं सुतरां सुमिष्टं
नामातिरम्यं हि निवेदितेति ॥७२

निवेदनस्यास्य गता प्रतीकतां
महीयसीयं महिला विदेशिनी ।
दिशः प्रतीच्या उपगम्य भारतं
ययाद्य विज्ञानमयं विधीयते ॥७३

तस्यैव परम-निवेदनस्य साधनमन्त्रस्य कणामात्रस्यापि लाभेन अहं धन्यातिधन्यो भविष्यामि ।

निवेदिता । धन्यातिधन्या अहमेव जाता ।

इत्यष्टम-दृश्यम्

—०—

## नवम-दृश्यम्

[ निवेदिता-बालिका-विद्यालय-प्रतिष्ठा ]

स्थानम्—१६ बोसपाड़ा लेन, कलिकाता ।
समयः—प्रभातम् । १३ नवेम्बर, १८९८ खीष्टाब्दः ।

[ कालीपूजा-दिवसः ]

( ततः प्रविशति आनन्दोत्फुल्ला निवेदिता )

निवेदिता । अहो ! परमानन्द-घनो दिवसोऽयम् । अद्य मम

शाश्वत स्वप्नः सफलीभविष्यत्यचिरेण । यतोऽद्य मातृदेवी श्रीश्री-सारदामणिः सानुग्रहमत्रागमिष्यति मत्परिकल्पित-बालिका-विद्या-लयस्य प्रतिष्ठा-कार्यं सम्पादयितुम् ।

अहो ! मम मानस-कन्या होयम् अभिनवा बालिका-विद्या-पीठी । सर्वं एव जानन्ति किल यत् सुखि-समृद्ध-सुयोग्य-परिवारो हि समाजस्य तथा राष्ट्रस्य प्राणस्वरूपः, परिवारस्य च प्राणस्वरूपा माता । सा हि समग्र-परिवारस्य स्थितिर्भित्तिः शक्तिस्तृप्तिः शान्तिश्च । अत एव सुशिक्षिता सुनिपुणा माता ह्यत्यावश्यकी— समग्र-समाजस्य तथा समग्रराष्ट्रस्य शाश्वत-कल्याणार्थम् । एतदर्थमहं वाञ्छामि एकमादर्श-बालिका-विद्यालयं प्रतिष्ठापयितुम्, यत्र भारत-ललनाः सर्वाङ्गीण-सार्वजनीन-शिक्षा-लाभस्य सुयोगं लप्स्यन्ते निर्बाधम् ।

सैव विशेष-वाञ्छा ममाद्य सूर्यकरोज्ज्वले प्रभाते पूर्णा भविष्यति । अहो आनन्दः !

परम-शुभः श्रीकालीपूजा-दिवसोऽयम् । महाशक्तिस्वरूपिण्या-महाकालिकाया महार्चना-दिवसे साक्षात्-कालीस्वरूपिणी श्रीश्री-सारदामणि-देवी अस्यापूर्व-विद्यालयस्य प्रतिष्ठां करिष्यति सानुग्रहम् । अहो ! चिन्तातीतं मम सौभाग्यम् ! ईदृशो मणि-काञ्चन-संयोगः क्वचित् कदाचिदेव संघटते मनुष्यजीवने ! अपरिमेयं सौभाग्यं मम ।

किन्तु कथं चिरायते ममादरिणी माता? अहं स्थिरं जानामि यत्, भारतीय-रमण्या आदर्श-विषये सा हि श्रीरामकृष्णस्य शेषकथा ।

किं सा प्राचीनोदाहरणस्य शेषोदाहरणम् ? उत नवीनादर्शस्य प्रथमोदाहरणम् ?

यथा तथा वा भवतु, भारतीय नारीपक्षे श्रीश्रीमातृदेव्याः सारदामणेः परम-मोहन-मधुराशीर्वादादधिकं किंवा वाञ्छनीयम् ? अत एव तस्याः परमाशीर्वादमेवाहम् अपेक्षे मम कन्यावृन्दार्थम् ।

अहो ! इत एव सा आगच्छति । "योगीन्" माता "गोलाप" माता च तया सहागच्छतः । अहा ! आनन्द-पात्रं मम परिपूर्णं जातम् ।

मातृ-वन्दना

जप जननीमनुमेधि सजलजनुरुद्भासय तनुतापम् ।
सुतजनसेवधिमर्चय निरवधि पुनीहि वपुरघिपापम् ।।७४

धन्योच्चारणमघौघवारणमशमोत्सारण-जापम् ।
आवर्तय चिरमविलुप्ताक्षरमुत्तर मृत्युविलाम् ।।७५

जननीनामनि रसनासङ्गिनि रविजनिरुजज्झति चापम् ।
अमृताद्जन्यं जननीस्तन्यं लघयति दैन्यकलापम् ।।७६

( ततः प्रविशन्ति—श्रीसारदा, "योगीन्" माता, "गोलाप" माता, स्वामी विवेकानन्दः, स्वामी सदानन्दः स्वामी ब्रह्मानन्दश्च)

निवेदिता । श्रीश्रीमातृदेव ! प्रणमामि । अहं भवत्या अबोध-बालिका निवेदिता नित्यं भवदाशीः प्रार्थिनी ।

अद्याहं गुरुतर-कार्यमेकं प्रारप्स्ये । बालिकानाम् आदर्श-शिक्षा-दान-केन्द्रम् अत्राद्य स्थापयिष्यामि । तत आशिशं ददातु भवती कृपया, येनेमा बालिका देशमातुर्मुखमुज्ज्वलं कर्तुं शक्ष्यन्ति अदूर-भविष्यति ।

सारदा। (मृदुस्वरेण) अहं प्रार्थये यत् जगन्मातुराशीराशि-रस्मिन् विद्यालये पततु निरन्तरम्। अत्र शिक्षाप्राप्ता ललना आदर्श-ललना भवन्तु।

गोलापमाता। (उच्चैः) शृण्वन्तु सर्वे श्रीमातृदेव्या महा-शीर्वादम्।

( आशीर्वचनस्य आवृत्तिं करोति )

( श्रीमाता "योगीन्" माता "गोलाप"माता चाभ्यन्तरं प्रविशन्ति )

विवेकानन्दः। निवेदिते मार्गट्! अपि सन्तुष्टा त्वं जाता? परिपूर्णा तव मनोवाञ्छा?

निवेदिता। श्रीगुरुदेव! भवान् जानाति किल यदहम् आजीवनं शिक्षाव्रतिनी। शिक्षा-विषये अस्ति मम निजम् अभिनवं मतम्। तदेवाहं वाञ्छामि परीक्षितुम्। अतीव हर्षान्विताहं तस्य सुयोगं लब्ध्वा।

सारदानन्दः। किं तद् भगिनि! कौतूलाक्रान्तोऽहम्।

निवेदिता। शृणोतु भवान् कृपया। मन्मते शिक्षा न केवलं ज्ञानस्योन्मीलनम् अपि, तु सा अनुभूतेः प्रवृत्तेश्च समोन्मीलनम्।

दीधितेरिव कञ्जस्य जीवनाम्भोरुहस्य नः।
विकाशने हि शिक्षायाः साफल्यमुपजायते ॥७७

निश्च्योतेन्मधु चेत्तस्य सौरभं चेद् विसर्पति।
वर्णश्चेद्विन्दते दीप्तिं शिक्षाब्धं सुस्फुटं तदा।
शिक्षा हि जीवनस्यास्य सर्वाङ्गीण-समुन्नतिः ॥७८

उन्मीलयितुमर्हेयं यदीमां कलिकामहम् ।
अनेनैव प्रकारेण सार्थं मे जीवनं तदा ।।७९

ब्रह्मानन्दः । सत्यं पूर्णसत्यम् ।

निवेदिता । श्रीजनन्या आशीर्वादपूतस्यास्य बालिकाविद्यालयस्य शुभनाम भवतु "श्रीरामकृष्णविद्यालयः" ।

विवेकानन्दः । भवतु तत् । श्रीसारदामणिदेव्या मधुराशीर्वादपूतः श्रीरामकृष्ण-परमहंसदेवस्य पुण्यनाम्ना धन्यः जनक-जननी-स्नेह-पुष्टोऽयं बालिका-विद्यालयः भवतु समग्र-देशस्य श्रेष्ठं पीठस्थानम् ।

——०——

## पट-परिवर्तनम्

स्थानम्—निवेदिता-बालिकाविद्यालयः ।

समयः—प्रभातम् ।

पठनरता,—कतिपयाश्छात्र्यः ।

( ततः प्रविशति आनन्दोत्फुल्ला निवेदिता )

निवेदिता । वत्साः ! ममादरणीयाः कन्यकाः ! अपि श्रुतो युष्माभिर्विशेष-शुभसंवादः ?

श्यामा । मातर्मातः ! न जानाम्यहं किञ्चिदप्येतद्विषये । कथयतु कथयतु तं सत्वरम् ।

निवेदिता। अस्माकं परमादरणीया जननी श्रीसारदामणिः आगमिष्यति अत्राद्य युष्माभिः सह मेलितुम्। अपि नैष विशेष-शुभसंवादः ?

तारिणी। निश्चितं मातर्निश्चितम्। सा अस्मान् भृशम् आद्रियते, सर्वदाऽस्मभ्यं प्रभूतानि मिष्टान्नानि ददाति अस्मान् सुन्दराख्यगायिका वदति च। परम-स्नेहशीला अस्माकं माता।

मातङ्गिनी। मातः! किं वयं कुर्मस्तस्या अभ्यर्थनार्थम् ?

निवेदिता। किं यूयं कर्तुमिच्छथ ?

श्यामा। अहं मातृवन्दनं करिष्यामि।

तारिणी। अहं श्लोकावृत्तिं करिष्यामि।

मातङ्गिनी। अहं यन्त्रवादनं करिष्यामि।

निवेदिता। ( आश्चर्यान्विता ) किं यूयम् इदं सर्वं कर्तुं समर्थाः ? नाहं ज्ञातवती एतावत्कालं यन्मम कन्यका एतादृश-गुणसम्पन्नाः।

श्यामा। ( लज्जिता ) मातः! नाहं गुणवती गायिका, अहमति-साधारणं बालिकामात्रम्। किन्तु अहं मम श्रद्धेय-पिता-महोसकाशात् मातृ-वन्दनं शिक्षितवती।

निवेदिता। सुष्ठु तत्। प्रियतम-कन्यके! एतन्मम महानन्द-कारणम्।

तारिणी। ( लज्जिता ) मातः! अहमपि न गुणवती।

कतिपयान्येव उल्लिखामि नामानि। एवमन्येऽपि भवत्याः स्नेहधन्याः सहानुभूति-तृप्ताः साहाय्य-दीप्ताश्च।

निवेदितायाः सविधे भगिन्या
अस्माकमेषाखिल-भारतं भूः।
बहत्यशोध्यामधमर्णतां यत्
न तत्र सन्देहलवोऽपि भाति ॥१००

सर्वस्वदानं निजदेशहेतो-
र्नादृष्टपूर्वं परमन्वदेश्यः।
देशान्तरार्थं विदधाति तच्चेत्
तदेव सर्वैरभिनन्दनीयम् ॥१०१

प्रतीच्यकन्यापि निवेदितेयं
प्राच्ये समागत्य हि भारतेऽस्मिन्।
प्राणान् पणीकर्तुमभूत् प्रवृत्ता
सेवाविधाने तदतीव चित्रम् ॥१०२

उदारदृष्टेर्वसुधा कुटुम्बम्
इत्येतदाभाणकमद्य सत्यम्।
सूर्यप्रभायां शशिचन्द्रिकायां
समीरणस्यापि सुशीततायाम्।
रुतौ पिकानां सुरभौ सुमानां
तदेव सत्यं विततं विभाति ॥१०३

महाजनानां महनीय-कृत्यं
देशादि-सङ्कीर्ण-वृतिं विलङ्घ्य।
सर्वत्र विश्वे लभते प्रसारं
न विस्मयस्यावसरोऽत्र कश्चित् ॥१०४ (कुलकम्)

अबला । सत्यं देव ! पूर्णसत्यम् । वस्तुतः, शिक्षा-नीतिः समाज-नीतिः राज-नीतिरर्थनीतिः जनसेवा देशसेवा साहित्यं शिल्पं सङ्गीतम् एषु सर्वेष्वेव विषयेषु भवत्या दानान्यमूल्यानि ।

अतिक्षुद्रं साधारणं दीनहीनञ्च भवत्या गृहम् । तथापि भवत्या सह आलोचना-परामर्शार्थं अत्रागतानां समग्र-भारतवर्षस्य महा-मनीषिणां श्रीचरण-सरोज-रजोभिरिदं पवित्रीभूतं महातीर्थ-रूपं धारकञ्च । स्पृशामीमं पूत-धुलिराशिं, निदधामि च मस्तके । (तथा करोति)

निवेदिता । (अबलाम् आलिङ्ग्य) अबले ! न भवती अबला, भवती सबला महाशक्तिधारिणी महाकर्मकारिणी महाधर्मचारिणी च ।

डक्टर जगदीशचन्द्र-महोदय ! न केवलं भवान् श्रेष्ठो वैज्ञानिकः, भवान् श्रेष्ठो दार्शनिकः श्रेष्ठ ऋषिश्च ।

वसुदम्पति-महोदयौ ! मम परमादरणीयौ भग्नी-भ्रातरौ ! सफला भवतु नाम भवतोर्युग्म-साधना । महामातुर्मङ्गलाशिषो वर्षन्तु भवतोर्मस्तकोपरि नित्यम् ।

अबला । धन्यौ आवाम् । भगिनि ! भवती भृशं परिश्रान्तः परिलक्ष्यते, तत आगच्छतु आवाभ्यां सह दार्जिलि-नगर्याम् । तत्र "रायभिला"-नामकं भवनम् आवाभ्यां गृहीतम् । तत्र शान्त-स्निग्ध-शुचि-परिवेशे पूर्ण-विश्रामं लब्ध्वा भवती अचिरेण सुस्था भविष्यति सुनिश्चितम् ।

निवेदिता । धन्यवादः, सहस्र-कोटि-धन्यवादाः ।

अवश्यमेवाहं यास्यामि भवद्भ्यां सह। अतीव मनोहारिणी सेयं नगरी, मम प्रियतमा च। हिमाचलो मम जनकः। भारत-दुहिताहम्। ततोऽहं भारतस्य प्रत्येक-धूलिकणामपि पूजयामि।

श्रीभारतभूमिवन्दना—

भारतभूतलमतीव निर्मलमवगत-कुशलं कान्तम्।
श्रुत्यनुशासन-नन्दिनिखिलजनमात्मविसर्जनदान्तम्॥१०५
परमतसहनं परार्तिदहनं मुनिमत-गहनं धन्यम्।
यमनियमासन-नियमित-साधन-विदलित-मानस-दैन्यम्॥१०६
भारतभूतलमाध्यात्मिकबल-दत्तभुवनतलभद्रम्।
जलनिधिमेखलमुदारहृत्तलमपेत-दुर्बलमुद्रम्॥१०७

इत्येकादश-दृश्यम्।

——o——

## द्वादश-दृश्यम्

### ( अन्तिम-दृश्यम् )।

### [ निवेदिताया महासमाधिः ]

स्थानम्—रायभिला, दार्जिलिं।
समयः—प्रभातम्। १३ अक्टोवर, १९११, शुक्रवासरः।

( प्रविशति शय्यासीना निवेदिता )

निवेदिता। ( गवाक्षाद् बहिर्विलोक्य ) अहो! अकस्मात् अपसृता घन-घोरा कुज्झटिका, हसति सानन्दं कनक-किरणदीप्तं

निर्मलं नीलनीलं गगनम्, लसति शुभ्र-तुषार-किरीटी हिमाचलः सुवर्ण-किरीटी राजमानो राजाधिराज इव ।

गुरोर्गुरुगुरोश्चाहं विरहिण्यतिदुर्भगा ।
न संघेऽस्ति मम श्रद्धा न च तन्नियमादिषु ॥१०८

सा केवलं गुरोस्तस्य गुरोश्च चरणाम्बुजे ।
तदेव भवतादद्य ममाशास्थलमन्तिमम् ॥१०९ ( युग्मकम् )

अहो ! परम-पुण्यः परम-धन्यः अनन्यश्चायं दिवसः। मन्ये अयं मम प्रत्यावर्तन-दिवसः, इयं मम विरहावसानतिथिः, इदं ममामृतास्वादनलग्नम् । अहो आनन्दः !

( ततः प्रविशतो वसु-दम्पती )

अबला । प्रियतमे भगिनि ! का वार्ता ? कीदृशीम् अनुभवति भवती अद्य स्वशरीरावस्थाम् ?

जगदीशचन्द्रः । श्रद्धेये भगिनि ! भवत्याः कुशलं याचे ।

निवेदिता । ( सचकिता ) "कुशलम् ?" कुशलमेव मम सर्वथाद्य । यतोऽद्य मम प्रियतम आगमिष्यति मम दीनहीन-कुटीरे, मम तुच्छातितुच्छशय्यापार्श्वे ।

अबला । ( साश्रुनेत्रा ) सत्यम् ? कः स भगिनि ! कः सः ?

निवेदिता । "कः सः ?"

"तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मात्"
( बृहदारण्यकोपनिषत्, १।४।८ )

स पुत्रादपि प्रियतरः, वित्तादपि प्रियतरः, अन्य-सर्व-प्रियवस्तुभ्योऽपि प्रियतरः ।

मम प्रियतम एव परम-प्रियः। पश्यति स मां गवाक्ष-पथेन केवलम्। करोति स मम द्वारदेशे कराघातं केवलम्। तस्य कोऽप्यभावो नास्ति, तथापि सः अभावग्रस्त इवागच्छति मत्समीपे येनाहं तस्य सेवां कर्तुं पारयामि। तस्य क्षुधा नास्ति, तथापि स बुभुक्षुरिवागच्छति मत्समीपे, येनाहं तस्मै भोज्यदानं कर्तुं पारयामि। स आगच्छति मया सह साक्षात्कार-लाभार्थम्, येनाहं मम बद्ध-द्वारम् उन्मोच्य तस्मै आश्रयं दातुं पारयामि। स क्लान्तिं नाटयति, येनाहं तस्मै विश्रामं दातुं पारयामि। आगच्छति स भिक्षुकरूपेण येनाहं तस्मै भिक्षां दातुं पारयामि।

प्रियतम! प्रियतम! यत्किञ्चिदस्ति मम तदपि तवैव। अहमपि तवैव सम्पूर्णतया सुनिश्चितम्। माम् एकान्ततो विलोप्य तत्स्थले त्वमेव दन्डायमानो भव।

अबला। (रोरुद्यमाना) भगिनि! शान्ता भवतु, शान्ता भवतु कृपया।

निवेदिता। शान्तास्मि भगिनि! सुतरां शान्तास्मि, यतोऽह-मद्य शान्तिसागरनिमग्नास्मि। (संविदं लब्ध्वा) प्रियतम-भगिनि! अबले! भवत्या ऋणं न परिशोध-योग्यम्। भवत्याः सेवा-शुश्रुषे हि अविस्मरणीये। मुहूर्तमात्रमपि भवत्याः न मम शय्यापार्श्वंस्त्यक्तः। ममतामयि भगिनि! गृह्णातु मम शेष-प्रणामम्।

अबला। (रुदता) प्राणाधिके! यदाहम् असुस्था जाता

तदा भवत्येव मम सेवा-शुश्रूषादिरतासीन्निःस्वार्थभावेन । भवत्याः ऋणमपि न परिशोधयोग्यम् ।

निवेदिता । प्राणप्रतिमे ! न रोदितु भवती, न रोदितु । भवत्या एकापि अश्रुकणा मां तापयति सहस्र-प्रचण्ड-मार्तण्डा इव ।

आचार्यदेव ! कथं भवतोऽपि नयने अश्रुरेखा ? वैज्ञानिको भवान्, भावावेगो भवति न शोभते ।

जगदीशचन्द्रः । ( अश्रूणि संमृज्य ) नायं भावावेगः । स्नेह-सुकोमले भगिनि ! अयं मम हृदयोत्थः शोकप्रवाहः केवलम् ।

निवेदिता । परम-ममताघन आचार्यदेव ! शोकस्य का कथा ? अद्य मम महामेलन-लग्नम्, अद्य मम प्रियतमेन सह महामेलनकालः खेलनसमयो वा । भवतां सर्वेषां स्नेहो ममता प्रीतिश्च माम् अनु-सरन्ति सगौरवम् ।

आचार्यवर ! पठतु कृपया मत्संगृहीतं मद्वितीर्णं कल्याण-बौद्धमन्त्रम् ।

जगदीशचन्द्रः । यद् भवती इच्छति । ( पठति )

"ये केचि पाणा भूतत्थि तसा वा थावरा वा अनवसेसा
दीघा वा ये महन्ता वा मज्झिमा रस्सका अणुकथूला ।।
दिट्ठा वा येवा अदिट्ठा ये च दूरे वसन्ति अविदूरे
भूता वा सम्भवेसी वा सब्बे सत्ता भवन्तु सुखित'त्ता ।।"
(सुत्त-निपात-करणोय मैत्री-सूत्र ४—५ )
"मेत्तञ्च सब्बलोकस्मिं मानसं भावये अपरिमाणं ।
उद्धं अधो च तिरियञ्च असम्बाधं अवेरं असपत्तं ।।" (८)

(१)' 'तृष्णायुक्ताः वा तृष्णाहीनाः ।
दीर्घाः महान्तः वा मध्यमाः, ॥
ह्रस्वाः वा क्षुद्राः दृष्टाः वा अदृष्टाः ।
दूरस्थाः वा निकटस्थाः जाताः वा जनिष्यमाणाः ।
सर्वे जीवाः भवन्तु सुखितचित्ताः ॥" (४—५)

(२) ऊर्द्ध्वस्थाः अधस्थाः चतुर्दिकस्थाः ।
प्राणिनः भवन्तु बन्धनहीनाः वैरशून्याः ॥
प्रतिद्वन्दिरहिताश्च इत्थं सर्वजगति
मैत्रीभावं सम्प्रसारितं कुर्यात् ॥

अवला । ( स्वगतम् ) मन्ये, उमा हैमवतीव सा शुभ-शरत्-काले पितृगृहं प्रतिनिवर्तिष्यते । ( प्रकाशम् ) अहो ! अपूर्वरूप-धरं सहस्र-सूर्यरश्मि-समन्वितम् इव राजते भगिन्या मञ्जुमुखम् । निवात-निष्कम्प-हिरण्य-होमानल-शिखेव लसतोयं दिशि दिशि स्थिर-दीप्तिं विकीर्य । सेयं दीप्तिः कदापि म्लाना न भविष्यति, कदापि न ।

भारतवर्षाय सर्वस्वं निवेदितवति निवेदिते ! विश्व-कल्याणार्थं स्वजीवनं निवेदितवति निवेदिते ! स्वात्मानम् अर्घ्य-रूपेण निवेदितवति निवेदिते ! भारत-जननीचरणे परम-जननी-चरणे च निवेदिते, स्वार्थकनामाङ्किते निवेदिते ! समग्र-देशस्य प तः प्रदत्तां गृह्णातु मम श्रद्धा-प्रणतिं भवती ।

प्राणालोकेन भूयासुरनिर्वाणेन ते चिरम् ।
प्राणालोकाः शतं दीप्ता मानवानां गृहे गृहे ॥११०

त्वदीयानन्त-गीतेन हृदयेषु शतेषु नृणाम् ।
प्रादुर्भवतु झङ्कारो मोहसुप्तान् प्रबोधयन् ॥१११

अनिःशेषितया नित्यमात्मनः सुधया च ते।
पूर्यन्तां शतमात्मानः आर्ये भारतवासिनाम ॥११२

जीवने भवती यद्वन्मरणेऽपि तथैव च।
पर-सौन्दर्य-माधुर्ये महतो जीवनस्य ते।
वितरत्यस्य दुर्भाग्य-देशस्य परिपालने ॥११३

निवेदिता। ( अश्रुण्वती ) आगतोऽसि प्रियतम! आगतोऽसि त्वं मदर्थं सप्रेम? ध्वनति तव मञ्जुल-मञ्जीर-झङ्कारः सुमधुरम्, व्याप्नोति तव कमन-कमलगन्धश्चतुर्दिशमं, दीप्यति तव अम्लानालोकोऽहरहः, नदति तव वरेण्य-वेणूध्वनिः सगौरवम्।

मम प्राणसख! मम लीलासहचर! आरोहय आरोहय मां वराभयदायिनि धरारयरोधिनि ज्वराशयनाशिनि तव विशाल-वक्षसि, नय नय मां तव ललित-लसित-लीलाकुञ्जे ; मुहूर्तमात्रमपि विलम्बोऽसहनीयः।

अबला। ( व्याकुला ) भगिनि! भगिनि! प्रियतमे भगिनि!

निवेदिता। "असतो मा सद् गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतं गमय।" ( बृहदारण्यकम्—१।३।२८ )

अबला। ( पूर्ववद् व्याकुला ) भगिनि, भगिनि, मधुमयि भगिनि!

निवेदिता। तरणी निमज्जिता भवति, किन्तु निश्चितमेवाहं सूर्योदयं द्रक्ष्यामि, निश्चितमेव, निश्चितमेव, निश्चितमेव।

("The boat is sinking, but I shall see the sun-rise.")

अबला । भगिनि ! भगिनि ! कल्याण-कमने भगिनि ! किमन्यत् ते प्रियं कर्तुं पारयामि ?

निवेदिता । इतोऽपि प्रियं स्यात् ? तथापीत्थमस्तु :—

भरत-वाक्यम्

धरणी-भरणी  भारतजननी
साम्य-मैत्री-मोहिनी
शोचन-हरणी  मोचन-तरणी
जयतु विश्वविनोदिनी
शोभन-शान्तिः  लोभन-कान्तिः
राजतु निखिले भुवने ।
सेवन-नीतिः  मेलन-गीतिः
नदतु शीतले पवने ॥

ॐ शान्तिः शान्तिः शान्ति ॥

इति द्वादश-दृश्यम् ।

समाप्तम् इदं "निवेदिता-निवेदितं" नाम नाटकम् ।

—०—

चतुर्धुरीण-रसया रचितं सविसस्मितम्
रोचतां रूपकं रुच्यं निवेदित-निवेदितम् ॥

भगिनी-निवेदितायाः दार्जिलिं-नगरीस्थ समाधि-सौधे क्षोदितः देशवासिणां श्रद्धाञ्जलिः —

"अत्र विराजते मार्गारेट् इ नोवल्-नाम्न्याः रामकृष्ण-विवेकानन्दयोः भगिणी-निवेदितायाः भस्मराजिः, या भारताय स्वर्वस्वं दत्तवती ।"

[ "Here repose the ashes of Sister Nivedita (Margaret E. Noble) of Ramkrisna-Vivekananda, who gave her all to India."]

"विद्यया विन्दतेऽमृतम्"

## PRACYAVANI

(Institute of Oriental Learning)

(Registered Under Act XXI of 1860)

Office— 3, Federation Street
Calcutta—700009
(Phone : 35-1995)

### FOUNDERS

Established in 1943.

By the Learned Couple :

Dr. Jatindra Bimal Chaudhuri M.A., Ph. D. (London), Kavyatirtha.

Formerly, Officer-in-charge of the Sanskrit-Pali Department, India Office Library, London, Lecturer in Sanskrit and Bengali, School of Oriental Studies, London University ! Professor and Head of the Department of Sanskrit, Presidency College, Govt. of West Bengal, Calcutta ; Principal, Sanskrit College, Govt. of West Bengal, Calcutta ; Lecturer in Sanskrit, University of Calcutta ; Secretary, Vangia Sanskrit Siksa Parisat, Govt. of West Bengal, Calcutta ; author of numerous Research Works and articles in English, Bengali and Sanskrit ; and of many Modern Sanskrit Dramas, Poems and Songs ; Member, Central Sanskrit Board, Govt. of India, etc. etc.

And

Dr. Roma Chaudhuri, M. A., Ph.D. (Oxford), F.A.S.B. Formerly Professor and Head of the Department of.

Philosophy, Lady Brabourne College, Govt of West Bengal, Calcutta, and Lecturer in Philosophy, University of Calcutta,

Principal and Professor of the above College for 30 years Vice-Chancellor, Rabindra Bharati University for 7 years. Author of many Research Works and Articles in English, Bengali, Sanskrit ; and also of many Modern Sanskrit Dramas, Sanskrit Poems and Songs etc. etc.

## Aims

Propagation and Popularisation of Sanskrit Language and Literature, Learning and Culture amongst all ; making arrangements for Lectures, Seminars, Symposia, Sanskrit Song-Recitals, Staging of Sanskrit Dramas, Debates and Discourses ; Sanskrit Pathsalas or Catuspathis ; Lessons in Sanskrit Dialogues and Sanskrit Songs, Libraries of printed books and Manuscripts ; Publications in English, Bengali, Sanskrit and Hindi, and so on.

## DEPARTMENTS

(1) **Lectures, Seminars, Symposia, etc.**—Regular Lectures and the like on different Oriental and Cultural Topics by well-known scholars are arranged.

(2 **Sanskrit Song-Recitals, Sanskrit Debates, Extempore Speeches, Discourses and the like**—Regularly arranged.

(3) **Sanskrit Dramas**—Pracyavani Sanskrit-Pali-Dramatic Troupe regularly stages Sanskrit-Pali Dramas, in different parts of India, on invitation, on an average of 30/40 times a year. Thus it has already staged, within the last 30 years more than 1000 times, 50 Modern Sanskrit Dramas, composed by Dr. Jatindra Bimal, and Dr. Roma Chaudhari on devotional, national and cultural themes, containing numerous poems and songs, with great success before appreciative audiences of thousands strong, in Rangoon, Nepal (Kath-

mandu), Calcutta, Delhi, Bombay, Madras, Pondicherry, Bangalore, Goraksapur, Jamnagar, Dwaraka, Vrindavan, Naintal, Patna, Puri, Purulia, Navadwip, Jamsedpur, Burnpur, Contai, Midnapore, Hooghly, Banipur, Bankura, Mallickpur, Chittaranjan, Howrah, Barranagar, Mayapur, Pyradanga, Village (Nadia, W. Bengal), Nimpith Village (Jaynagar-Mazilpur, 24-Pgs.), Agarpara, Jaipur (Rajasthan Okha (Saurastra), Suri, Surat, Udaipur, Jodhpur, Hardwar, Hrisikesh, Kankhal, Kasmir, (Srinagar), Jammu, Kanya-Kumarika, Digboi, Dwaraka, Bhet-Dwaraka, Guzrat, Poona, Gauhati, Agra, Lucknow, Ujjain, Bhopal, Indore. Rewa, Chandigarh, Himachal Pradesn (Minali, Kulu, Sunder Nagar, Simla, Solon. Chamba, Dharamsala, Nahar etc.), Punjab (Ludhina Amritsar, Jullunder, Rupar, Patiala etc.), Hariyana (Yumma Nagar, Karnal, Panipat etc.), Kuruksetra, Baroda, Ahmedabad, Hydrabad, etc. etc.

It had the great honour, of staging two Sanskrit Dramas "Amara-Miram" on the holy life of Sri Mira Bai and "Bharata-Vivekam" on the holy life of Swami Vivekananda in Rastrapati Bhavan, New Delhi, in April 1963 and October 1964, in the benign presence of the revered Rastrapati Dr. Sarvapalli Radhakrisnan, and a large number of Central Ministers, High Officials, Scholars and Devotees. The Rastrapati graciously donated Rs. 500 - as his blessing to Pracyavani, for thè latter Drama on 19.12.64.

"Bharatacaryam" was staged in Rastrapati Bhavan in the the benign presence of the revéred Rastrapati Dr. S. Radha Krisnan, who donated Rs. 1,500/- to "Pracyavani" as his blessings.

"Sankara-Samkaram" was staged in Kathmandu, Nepal, under the auspices of Indian Embassy, in the benign presence of King Mahendra of Nepal, and other members of the Royal Family.

By staging "Kavi-Kula-Kokilam" "Pracyavani"—for the first time for West Bengal—Won the coveted "Svarna-Kalasa" (Golden Pitcher) as first Prize in All-India Kalidasa-Samaroha in Ujjain in November, 1967.

It also staged the first-ever Pali Drama, in the whole History of Pali Literature "Bimba-Sundari-Patibimhanam" in Rangoon.

(4) Castuspathis—It maintains three Castuspathis, one exclusively for ladies. The number of students is uniformly high, and results good.

(5) Lessons in Sanskrit Dialogues and Songs—Arranged.

(6) Library—There is a big Library of Printed books in English, Bengali, Sanskrit, Hindi ; as well as a large and valuable collection of Śanskrit Manuscripts.

(7) Press—Good English, Bengali and Sanskrit Presses of its own.

(8) Publications—More than 150, in English, Bengaii and Sanskrit, including valuable Research Works and Modern Sankrit Dramas, and Song-Collections ; also "Pracyavani" Journals (English and Bengali).

(9) Recognised and aided by Central and State Governments.

(10) New and Extensive Development Schemes, in all the Departments, undertaken.

## PUBLICATIONS OF PRACYVAVANI & SOME OTHER WORKS OF

### Dr. Jatindra Bimal Chaudhuri

A. Contribution of Women to Sanskrit Literature (in 7 volumes)

* Vol. I (Sanskrit Drama)— Viddhasala-Bhanjika of Rajasekhara with the commentary of Sundari & Kamala called Camatkara-Tarangini. Rs. 25/-
* Vol. II (Sanskrit Poetry)—Sanskrit Poetesses, Part I. An outstanding record of literary achievements of women Sanskrit Poets of Ancient, Mediaeval and Modern India. English Translation by Dr. Roma Chaudhuri. Rs. 25/-
* Vol. III & IV (bound together)—Pauranic and Smriti Literature-Contributions of women to Pauranic and Smriti Literature. It also contains Binabayi's Dvaraka-Pattala and Visvasa Devi's Ganga-Vakyavali. Rs. 30/-
* Vol. V (Tantras)—The Sudarsana of Pranamanjari. Commentary of Pranamanjari on Tantraraja Tantra. Rs. 35/-
* Vol. VI (Sanskrit Poetry)—Sanskrit Poetesses, Part B. Six complete works with critical editions of two, viz., Vaidyanatha-Pranada-Prasasti of Deva Kumarika and Santana-Gopala Kavya of Laksmi Devi. Rs. 25/-
* Vol. VII (Smriti Literature)—An outstanding account of the scholarly achievements of Laksmi Devi Payagunda and a critical edition of Kala-Madhava-Laksmi by Dr. J. B. Chaudhuri. Rs. 25/-

**B. Contribution of Muslim to Sanskrit Learning.**

* 1. Sangita-Malika of Md. Shah. One of the best contributions of Muslims to Fine Arts in Sanskrit. Rs. 20/-
2. Khan Khanan Abdur Rahim and contemporary Sanskrit Learning. First systematic study of the development of Sanskrit Literature during 1550 A.D. Rs. 18/-

XX 3. Samudra Sangama of Md. Dara Shukoh, critically edited for the first time by Dr. J. B. Chaudhuri and English translation by Dr. Roma Chaudhuri. Rs. 30/-

C. **Muslim Patronage to Sanskrit Learning.**

1. Muslim Patronage to Sanskrit Learning, Vol. 1 2nd Ed.) Ed. by Dr. J. B. Chaudhuri. Rs. 22/-
2. Muslim Patronage to Sanskrit Learning, Vol. II, Jataka-Paddhati-Udaharana by Krisna Daivajna (on the life of Khan Khanan Abdur Rahim)—Ed. by J. B. Chaudhuri. Rs 26/-
3. (Biography) Rudra Kavi & his works on Muslim Patrons Ed. by Dr. J. B. Chaudhuri. Rs 16/-

D. **Historical Kavyas & Works.**

1. Abdullah Carita of Laksmipati, critically edited for the first time by Dr. J. B. Chaudhuri. Rs. 20/-
2. Virabhadra Campu Kavya by Padmanabha Misra, a historical Sanskrit Campu, critically edited by Dr. J. B. Chaudhuri. Rs. 27/-
3. Jamavijaya Kavya by Vaninatha, a history of the Royal family of Nawanagar, Ed. by Dr. J. B. Chaudhuri. Rs. 27/-
4. Surjana-Carita-A historical Mahakavya by Candrasekhara of Bengal. A history of the Hara Dynasty of Bundi, Rajasthan. Ed, by Dr. J. B. Chaudhuri. Rs. 25/-
5. Nripati-niti-garbhita-Vritta or Farruk-Siyar Caritam by Lakamipati, Ed. by Dr. J. B. Chaudhuri. Rs. 30/-

E. **Sanskrit Poets of Mediaeval India**

* 1. Rasika-Jivana by Gadadhara Bhattacharya (A Sanskrit Authology of Mediaeval India). Ed. by Dr. J. B. Chaudhuri. Rs. 22/-

* 2. Romavali Sataka by Ramachandra Bhattacharya.- Ed. by Dr. J. B. Chaudhuri. Rs. 14/

* 3. Bhupa Sataka of Raghava Vacaspati Bhattacarya. Ed. by Dr. J. B. Chaudhuri. Rs. 14/-

* 4. Ramacandra-Yasah-Prabandha by Akabariya Kalidasa Ed. by Dr. J. B. Chaudhuri. Rs. 14/-

* 5. Dhurta-Vidambana of Amaresvara Sarman Ed. by Dr. J. B. Chaudhuri. Rs. 14/-

6. Padyaveni by Venidatta (The best Sanskrit Anthology of Mediaeval India). Ed. by Dr. J. B. Chaudhuri. Rs. 25/-

7. Sabhyalankarana by Govindajit. Ed. by Dr. J. B. Chaudhuri. Rs. 16/-

8. Sukti-sundra of Sundaradeva. Ed. by Dr. J. B. Chaudhuri. Rs. 14/-

F. **Sanskrit Duta-Kavya Sangraha**

1. History of Duta Kavyas of Bengal (In Sanskrit) By Dr. J. B. Chaudhuri. Rs. 18/-

2. Bhramaraduta Kavya by Rudra Nyrayapancanana Ed. by Dr. J. B. Chaudhuri. Rs. 16/-

* 3. & 4. Vanmandana-gunaduta Kavya by Viresvara and Candraduta Kavya by Jambu Kavi. Ed. by Dr. J. B. Chaudhuri. Rs. 16/-

* 5. Hamsaduta by Vamana Bhatta Bana. Ed. by Dr. J. B. Chaudhuri. Rs. 14/-

* 6. Panthaduta of Poet Bholanatha of Bengal. Ed. by Dr. J. B. Chaudhuri. Rs. 12/

7. Padankaduta by Krisnanatha Sarvabhauma. Ed. by Dr. J. B. Chaudhuri with an original commentary called Bhasvati by Dr. J. B. Chaudhuri. Rs. 16/-

8. Ghatakarpara Kavya, Ed. with an original commentary in Sanskrit by Dr. J. B. Chaudhuri. Rs. 16/-

* 9. Meghaduta of Kalidasa with the commentary of Bharata Mallika and copious extracts from various commentaries. Ed. by Dr. J. B. Chaudhuri. Rs. 30/-

**G. Contribution of Bengal to Smriti Literature**

1. Tithi-viveka of MM, Sulapani. Ed. by Dr. J. B. Chaudhuri. Rs. 17/-
2. Sambandha-Viveka. Ed. by Dr. J. B. Chaudhuri. Rs. 17/-

**H. Pracyavani Sanskrit Series**

1. Position of Women in Vedic Ritual. By Dr. J. B. Chaudhuri. Rs. 25/-
2. Children's Sanskrit Literature. By Dr. J. B. Chaudhuri. Rs. 11/-

* 3. Padyamrita Tarangini of Haribhankara. Ed. by Dr. J. B. Chaudhuri. Rs. 30/-

4. Vivekananda Campu Kavya. By Dr. J. B. Chaudhuri. Rs. 10/-

**I. Poetical Works**

1. Sakti-Sadhanam—A Poetical composition by Dr. J. B. Chaudhuri, advocating among other things, the claims of Sanskrit being the National Language of India, National Unity on linguistic basis, Inter-state harmony etc. Rs. 14/-
2. Sanskrit and Bengali songs of Dr. J. B. Chaudhuri with Bengali translation by Dr. Roma Chaudhuri (in 7 volumes). Rs. 28/-

**J. Religion and Philosophy**

1. Srimad Bhagavad Gita with an introduction and Translation in Bengali by Dr. J.B. Chaudhuri Rs. 16/-

2. Sri Sri Candi with an introduction in Bengali on the history and significance of Durgapuja by Dr. J. B. Chaudhuri. Rs. 16/-

**K. Journal**

* English Journal of Pracyavani, vols. 1—10 Rs. 12/- each.

**L. Essays (Prabandhavali)**

* Collections of articles by erudite scholars of Pracyavani—Vols. 1—8 Rs. 20/- each

**M. Pracyavani Series in Bengali**

1. Jaina Guru Mahavira. By Dr. Bimala Charan Law. Rs. 14/-
2. Bharater Punyatirtha. By Dr. Bimala Charan Law. Rs. 14/-
3. Songs of Kavi Kamini Kumar—Complied by Sri Swarna Kamal Bhattacharya. Rs. 14/-
4. Avanti. By Dr. Bimala Charan Law. Rs. 14/-
5. Pandit Iswar Chandra Vidyasagar. By Dr. J. B. Chaudhuri. Rs. 14/-
6. Carvak Darsan. By Gopal Krishna Shastri. Rs. 4/-
7. Vaisnavacarya Viswantha. By Sri Nanigopal Bhattacharya. Rs. 14/-
8. * Songs of Lalan Fakir. Complied and edited by Md. Mansur Uddin. Rs. 14/-
9. Buddha-Yasodhara. By Dr. J.B. Chaudhuri, Rs. 15/-
10. Pauraniki. By Girindra Sekhar Bose. Rs. 14/-
11. Mahakavi Nabin Chandra. By Dr. J. B. Chaudhuri. Rs. 14/-
12. Vidarsan Yoga. By Silananda Brahmachari. Rs. 14/-

* 13. Bhara'er Da'san Samanvaya. By MM. Dr. Jogendr Nath Tarkatirtha. Rs. 18/-

* 14. Prachin Bharaier Dandaniti. By MM. Dr. Jogendra Nath Tarkatirtha. Rr. 25/-

15. Sentiment of Pathos in Bengali Literature. By Swarnakamal Bhattacharya. Rs. 14/-

* 16. Contribution of Bengal Vaisnavas to Sanskrit Literature. By Dr. J. B. Chaudhuri. Rs. 14/-

* 17. Vangiya Sanskrita Visvavidyalay. By Dr. J. B. Chaudhuri. Rs. 12/-

18. Gaura-Tattvam with an introduction by Dr. J. B. Chaudhnri. Rs. 18/-

19. Bhagavata Dharmer Pracin Itihasa (In 4 volumes) By Swami Vidyaranya. Rs. 200/-

20. Chaitanya Charitamriter Bhumika. By Dr. Radha Govinda Nath. Rs. 40/-

21. Gaudiya Vaisnava Darsan (In five parts) By Dr. Radha Govinda Nath. (Rabindranath Prize Winer)
   - Vol. I Rs. 30/-
   - Vol. II Rs. 30/-
   - Vol. III Rs. 30/-
   - Vol. IV, Pt-I Rs. 30/-
   - Vol. IV, Pt-II Rs. 30/-

**P. Original Sanskrit Dramas by Dr. J. B. Chaudhuri**

1. Swapna-Raghuvamsam In Press
2. Dhriti-Sitam. In Press
3. Bhakti-Visnupriyam ( Bengali ) ( On the holy life of Visnupriya, the holy consort of Sri Caitanya) Rs. 10/-
4. Mahaprabhu Haridasam (on the holy life of Haridasa, the foremost disciple of Sri Caitanyadeva). Rs. 10/-

5. Niskincana-Yasodharam (on the holy life of Yasodhara, the divine consort of Lord Buddha) Rs. 10/-
6. Mahimamaya Bharatam (Glorious India-Irrigation Policy of India throughout the ages). Rs. 10/-
7. Sakti-Saradam (On tbe holy life of Sri Saradamani, the holy consort of Sri Ramkrisna). Rs. 10/-
8. Bharata-Hridaya-Aravindam (On the holy life of Sri Aravinda). Rs. 10/-
9. Bhaskara-Bhasam (The light of the Sun)—In 3 vols.
   - (a) Bhaskarodayam (On the early part of the holy life of Poet Ravindranath with an English version by Principal Dr. Roma Chaudhuri). Rs. 30/-
   - (b) Bharata-Bhaskaram (On the middle part of the holy life of Poet Ravindranath). In Press
   - (e) Bhuvana-Bhaskaram (On the later part of the holy life of Poet Ravindranath). In Press
10. Ananda-Radham ( On the holy life of Sri Radha ). Rs. 10/-
11. Dinadasa Raghunatham ( On the holy life of Sri Raghunatha, one of the six Vrindavana Gosvamins ). Rs. 10/-
12. Priti-Visnupriyam (On the early life of Visnupriya, the holy consort of Lord Gauranga). Rs. 10/-
13. Vimala-Yatindram (On the holy life of Sri Ramanuja the great Vaisnava Vedantist). Rs. 10/-
14. Bharata-Janakam (On the holy life of Mahatma Gandhi). Rs. 10/-
15. Milana-Tirtha-Bharatam (On India's quest for Uniyt throughout the ages). Rs. 10/-

16. Bharata-Vivekam (On the holy life of Swami Vivekananda). Rs. 10/-

17. Visva-Vivekam (On the latter part of the life of Swami Vivekananda). In Press

18. Amara-Miram (On the holy life of Sri Mira Bai). Rs. 10/-

19. Bharata-Laksmi (On the holy life of Queen Laksmi Bai). Rs. 10/-

20. Bharata-Rajendram ( On the holy life of Dr. Rajendra Prasad ). In Press

21. Mukti-Saradam (On the latter part of the holy life of Sri Saradamani the holy cnnsort of Ram-krisna). In Press

22. Subhasa-Subhasam (On the holy life of Netaji Subhas Chandra Basu). In Press

23. Desabandhu-Desapriyam (On the holy lives of Desabandhu Chittaranjan & Desapriya Jatindra Mohan Sen Gupta). In Press

24. Venice-Banijam (Sanskrit version of Shakespeare's Merchat of Venice). Rs. 10/-

25. Othello ( Sanskrit version of Shakespeare's Othello ). Rs, 10/-

26. Raksaka—Sri Goraksam (On the holy life of Goraksanatha, the celebrated saint of Natha Sampradaya ). In Press

**Pali Drama**

1. Bimba Sundari-Pativimbnnam (First ever written Pali Drama on the holy life of Yasadhara Gopa). In Press

## WORKS OF
## DR. ROMA CHAUDHURI

### ENGLISH

1. Doctrine of Nimbarka & his followers (Vaisnava Vedanta. In 3 volumes. Published by Asiatic Society of Bengal.
2. Sufism & Vedanta. In 3 volumes. 2 volumes published and 3rd volume in Press.
3. An Indo-Islamic Synthetic Philosophy (Comparative survey of Indian and Islamic views, viz., Upanisads, Vedanta Systems, Holy Quran and Sufi system).
4. Doctrine of Srikantha (Saiva Vedanta). In 3 volumes. 2 volumes published and 3rd volume in Press.
5. Sanskrit and Prakrit Poetesses.
6. Philosophical Essays.
7. Ten Schools of Vedanta. In 3 volumes. Pubiished by Rabindra Bharati Uniersity, Calcutta.
8. Aspects of Indian life—published by the University of Rajasthan.

### BENGALI

1. Nimbarka Darsan.
2. Sufi Darsan O Vedanta.
3. Sanskrit O Prakrit Nariganer Kavitavali—Published by Visva Bharati.
4. Vedanta Darsan (5th Edition). Published by Visva Bharati.
5. Dasa Vedanta Sampradaya O Vangadesh, In 3 volumes.
6. Sahitya Kana.
7. Sanskritatanka Roga.

**Modern Sanskrit Drama composed by Dr. Roma Chaudhuri and staged all over India and outside many times with great success.** (Rs. 10/- each)

1. Samkara-Samkaram (On Samkaracharya).
2. Desa-Dipam (On the life of a Jawan fighting for his Mother Country).
3. Nagara-Nupuram (On a city girl)
4. Palli-Kamalam (On a village girl).
5. Samsaramritam (On Modern life).
6. Kavi-Kula-Kokilam (On Mahakavi Kalidasa).
7. Kavi-Kula-Kamalam (On Mahakavi Kalidasa).
8. Megha-Medura-Mediniyam (On Meghaduta of Kalidasa).
9. Yatindra-Yatindram (On Dr. J. B. Chaudhuri).
10. Abhedanandam (On Swami Abhedananda).
11. Nivedita-Niveditam (On Sister Nivedita).
12. Yuga-Jivanam (On Sri Ramkrisha Paramahamsa).
13. Bharatacharyam (On Dr. Sarvapalli Radhakrishna President of India and a great, World famous Philosopher).
14. Rama-Carita-Manasam (On Saint Tulsidas).
15. Bharata-Tatam (On Mahatma Gandhi).
16. Caitanya-Caitanyam (On Lord Sri Gauranga).
17. Rasamaya-Rasamani (On Rani Rasmani).
18. Prasanna-Prasadam (On Sadhaka Ramprasad).
19. Gana-Devata-Natakam (On Tarasankar The Great Bengali Writer).
20. Agni-Vina-Natakam (On Poet Nazrul).
21. Bharata Pathikam (On Raja Ram Mohan Roy)